यन्त्रशब्दव्युत्पत्तिः। यन्त्रपूजाविधिः। देवतर्पणविधिः। कामनाभेदे तर्पणाङ्गुली नियमः। गुरुपङ्क्तिध्यानम्।

## सप्तम उल्लास

(Pages 211—222)

वटुकादिभ्यो बलिरवश्यं देयः। वटुकमन्त्रोद्धारः। वटुकबलिदानानन्तरं प्रार्थनामन्त्रः। योगिनीमन्त्रोद्धारः। योगिनीबलिदानानन्तरं प्रार्थनामन्त्रः। भूतपतिमन्त्रोद्धारः। भूतपतिबलिदानानन्तरं प्रार्थनामन्त्रः। क्षेत्रपालमन्त्रोद्धारः। क्षेत्रपालबलिदानानन्तरं प्रार्थनामन्त्रः। क्षेत्रपालस्य मन्त्रान्तरम्। राजराजेश्वरबलिमन्त्रोद्धार। राजराजेश्वरबलिदानानन्तरं प्रार्थनामन्त्रः। वटुकादीनां बलिदानस्थानविभागः। वटुकादीनां बलिदाने अङ्गुलीनियमः। कुलदीपलक्षणम्। कुलदीपप्रदानमन्त्रः। शक्तेः पानानन्तरं साधकस्य पानविधिः। अदीक्षिताया दीक्षाविधानेन शोधनम्। शक्तये अनिवेदितायाः सुरायाः पाननिषेधः। कुलाष्टकशक्तिकथनम्। अकुलाष्टकशक्तिकथनम्। "सहजा"-शक्तिकथनम्। एतासामभावेऽनुकल्पः। "सुलक्षणा"शक्तिकथनम्। वर्जनीयशक्तिकथनम्। देव्यै मादिसमर्पणमन्त्रः। क्षमाप्रार्थनमन्त्रः। शेषिकामन्त्रः। उच्छिष्टमातङ्गीध्यानम्। गुरोः शिष्येभ्यस्तत्त्वत्रयदानम्। शिष्यस्य स्थूलदेहशोधनम्। सूक्ष्मदेहशोधनप्रकारो मन्त्रश्च। परदेहशोधनप्रकारो मन्त्रश्च। बीजशोधनप्रकारो मन्त्रश्च। आत्मादितावत्रयाणां स्थूलादिभेदः। तत्त्वत्रयज्ञानफलम्। गुर्वादीनां पुरतः उपविश्य पाननिषेधः। प्राणभेदादिज्ञानं विना पाने दोषः। मन्त्रहीनमद्यपाने दोषः, पानमन्त्रश्च। कुण्डल्याहुतिमन्त्रः। दिव्यादिभेदेन पानस्य त्रैविध्यम् तल्लक्षणञ्च। अतिरिक्तपाननिषेधः। पूर्णाभिषिक्तानां पानप्रकारः। पाने देव्यादीनां तृप्तिः। दिव्यपानसुखम्। कौलपानसौख्यमेव मोक्षः।

## अष्टम उल्लासः

(Pages 223—236)

आरम्भादय उल्लासाः सप्त। तेषां लक्षणानि। द्रव्यसङ्गती वर्ज्यपात्राणि। एकपात्रकरणे दोषः। अनर्हैः सङ्गतिर्न कर्त्तव्या।

सङ्केतयोगेन स्रोतोभेदेन वा पानं कर्त्तव्यम्। चक्रमध्ये उच्छिष्टपान-भक्षणविधानम्। उच्छिष्टभैरवध्यानम्। तस्य बल्युद्वासनमन्त्रः। शान्तिस्तोत्रम्। चक्रस्थितानां कौलिकशक्तीनां चेष्टाः। अत्रैव मनसो विकृताभावे देवताभावप्राप्तिः। कौलिकनिन्दायां दोषः। तेषां सत्कारफलम्। उन्मनाः। शक्तिकौलिकयोः परचिन्तनम्। समवस्थालक्षणम्। शाम्भवी मुद्रा। सप्तमोल्लासयुक्तानां देवीभक्तानामष्टौ प्रत्ययाः अष्टावस्थाः अष्टौ सिद्धयश्च। कुलतत्त्वज्ञस्य शिवगुणप्राप्तिः। जाग्रदाद्यवस्थाभेदेन उल्लासानां भेदः। सप्तोल्लासज्ञः कौलिको मुक्तः। भैरवीचक्रे सर्वे द्विजातयः। वेदप्रमाणम्। चक्रमध्ये जातिभेदकल्पनायां दोषः। चक्रमध्ये स्त्रीपुंसामुपवेशनविधिः। जगतः शिवशक्त्यात्मकत्वे हेतुः। कुलनिष्ठानां शिवशक्तिसमायोगात् समाधिः। कामुकस्यात्रानधिकारित्वम्।

## नवम उल्लासः

(Pages 237—251)

स्थूलसूक्ष्मभेदेन ध्यानस्य द्वैविध्यम्। स्थूलध्यानम्। सूक्ष्मध्यानम्। ब्रह्मज्ञानम्। योगविल्लक्षणम्। समाधिलक्षणम्। जीवन्मुक्तलक्षणम्। समाधिस्थलक्षणम्। जीवात्मपरमात्मनोरभेदे दृष्टान्तः। ध्यानलक्षणम्। तत्त्वज्ञस्य विश्वविचेष्टितज्ञानम्। परतत्त्वज्ञाने संशयादिच्छेदः। शान्तिपदे न योगो नैव धारणा। ब्रह्मज्ञस्य नियमैरलम्। जीवात्मपरमात्मनोरैक्यं योगः। साधकानाम् अवस्थाचतुष्कम्। पूजादीनामुत्तरोत्तरप्राधान्यम्। तत्त्वज्ञानामुपासनाप्रकारः। जीवपरमात्मनोः स्वरूपम्। अधिकारभेदे देवज्ञानम्। योगिलक्षणम्। कुलयोगिलक्षणम्। कौलिकानां न विधिर्न निषेधः। योगिस्पर्शात् सर्वं शुचि। योगिगतमेव पन्थाः। कौलिकोत्तमलक्षणम्। शक्तिभक्तार्चनेनैव शिवः पूजितः। कुलज्ञावमाने दोषः। कुलधर्मप्रविष्टस्य कुलाचाराज्ञाने दोषः। दानविधिः। वीरचक्रे मधुदानफलम्। देहस्थितिकालपर्यन्तं वर्णाश्रमाचारः कर्त्तव्यः। कर्मानुष्ठाने हेतुः। कर्मानुष्ठानक्रमः। कर्मत्यागाधिकारिनिरूपणम्। अनधिकारिणां कर्मत्यागे दोषः। तत्त्वज्ञं कर्माणि न स्पृशन्ति। ब्रह्मज्ञः पुण्यपापैर्न लिप्यते।

## दशम उल्लासः

(Pages 252—266)

उत्तमादिभेदेन पूजा त्रिविधा। तृष्णया मादिसेवने पातकम्। पूजायास्तिथ्यादिनिरूपणम्। आचार्येण स्वयं वा चक्रपूजा कार्या। चक्रपूजनफलं, पूजाभावे दोषश्च। रोगादिशान्त्यर्थं योगिनीपूजा। बहूनामेकत्र समवाये पूजाकरणव्यवस्था। श्रीचक्रलक्षणम्। नवकुमारीपूजा। सशक्तिकः पूजयेत्। प्रतिपदादिक्रमेण कुमारीणां नामानि। कुमारीपूजनमन्त्रः। कुमारीपूजाफलम्। पक्षान्तरे नवयुवतीनां पूजा। तासां नामानि, पूजाफलञ्च। भृगुवारे शक्तिपूजाविधिः। पूजामन्त्रः। तत्पूजायां फलम्। नवमिथुनार्चनकालनिरूपणम्। तेषां नामानि विधानञ्च। वैशाखे स्वेष्टदेवतार्चनम्। त्रिसन्ध्यं पूजा कार्या। माघे स्वेष्टदेवतार्चनम्। कार्त्तिके स्वेष्टदेवतार्चनम्। अष्टाष्टकपूजा। मूलाष्टकनिरूपणम्। श्रीकण्ठादिपञ्चाशन्मिथुनपूजा। केशवादिमिथुनपूजा। डाकिन्यादिपूजाया-मनुग्रहः। दूतीयागफलम्। त्रिकपूजाफलम्। कुलपूजां विना चक्रे नाधिकारः। यन्त्रं विना पूजा निष्फला। कुलपूजाप्रशंसा। वेदोक्तविधिना कुलपूजाफलम्। अनुग्रहे षड्विधा व्यवस्था। वर्णस्थदेवतानां पूजामन्त्रः। निर्माल्यविसर्जनमन्त्रः। डाकिनीस्वरूपकथनम्। राकिणीस्वरूपकथनम्। लाकिनीस्वरूपकथनम्। काकिनीस्वरूपकथनम्। शाकिनीस्वरूपकथनम्। हाकिनीस्वरूपकथनम्।

## एकादश उल्लासः

(Pages 267—278)

क्रमज्ञः कनिष्ठोऽपि कुलपूजाधिकारी। अज्ञातकौलिकागमे व्यवस्था। नित्यादिपूजने कालनियमः। पूजायां कर्त्तव्यकार्याणि। श्रीचक्रे प्रवेशनिर्गमयोर्विधानम्, तस्मिन् कर्त्तव्यकार्याणि च। कुलाचार्यगृहे अमृतादिप्रार्थनं, तदकरणे दोषश्च। अस्नातस्य कुलद्रव्यपाननिषेधः। कुलामृतपाने विधानानि। अज्ञानिज्ञानिनोर्व्यवहाराः। चक्रमध्ये निषिद्धकार्याणि। कौलिकस्य पशुसंसर्गे हानिः। पशुभ्यः कुलद्रव्यं न

देयम् । चक्रमध्ये विवादादिनिषेधः । गुर्वादिस्मृतौ श्रीपूर्वकत्वम् । गुरुं नाम्ना न भाषेत । कुलशास्त्रमन्येषां न कथनीयम् । पशुमुखेभ्यः कुलधर्मश्रवणनिषेधः । ऊढादिभेदेन गुरुयोषितः पञ्च । वर्ज्याः स्त्रियः । पूज्याः स्त्रियः । आममांसादिदर्शने वन्दनम् । गुरुशक्तिसुतादिकुत्सा न कार्या । नग्नादिस्त्रीदर्शननिषेधः । दिवसे स्त्रीसङ्गादिनिषेधः । सर्वाः स्त्रियः मातृतुल्याः । स्त्रीताडनं न कर्त्तव्यम् । कुलवृक्षाः । कौलिकानां प्रायश्चित्तादिपञ्च वर्ज्यानि । महापातकपञ्चकम् । कौले निग्रहानुग्रहौ । पापकर्माणि । कुलनिन्दकानां वधे न दोषः । गुरुनिन्दकनिधनात् शिवे लयः । श्रीचक्रवृत्तान्तं गोपनीयम् । पश्वग्रे कुलप्रसङ्गोऽकर्त्तव्यः । गुरुमन्त्रयोरप्रकाशप्रकाशाभ्यां दोषः । कुलभ्रष्टस्य न निष्कृतिः । कौलिकस्य पातित्यकर्माणि । पातित्ये प्रायश्चित्तम् । आचारस्य प्राधान्यम् । गुरुस्त्रिवारमाचारं कथयेत् । शिष्यपापं गुरुं प्राप्नोति ।

## द्वादश उल्लासः

(Pages 279—292)

श्रीपादुकामाहात्म्यम् । पादुकास्मरणफलानि । गुरोरीश्वरसारूप्यम् । गुरुभक्तिहीनस्य निन्दा । सद्भक्तस्य प्रशंसा । गुरुभक्तिवर्णना । गुरुभक्तिफलम् । गुरुं न मर्त्यं बुध्येत । गुरुमन्त्रपरित्यागे दोषः । गुर्वग्रेऽकर्त्तव्यानि कार्याणि । नास्तिकवर्जनम् । गुरौ सन्निहिते अन्यपूजा न कर्त्तव्या । स्वशास्त्रोक्तरहस्यप्रकाशे समयच्युतिः । गुरुणा अद्वैतं भावनीयम् । आत्मादिभेदेन चतुर्विधा गुरुशुश्रूषा । गुरुशुश्रूषाफलम् । वित्तानुसारेण सर्वं करणीयम् । गुरुस्वापहरणे दोषः । गुरुद्रोहकराणि कार्याणि । गुरुस्थानादिविनाशे दोषः । गुरुनिन्दाश्रवणे प्रायश्चित्तम् । देशिकावासगमने वर्ज्यानि । श्रीगुरोः सर्वमूलत्वम् । सिद्धिकामिनो गुरुसेवने युक्तिः । गुरौ तुष्टे सर्वदेवतुष्टिः । गुर्वादिसन्निधाने त्याज्यकार्याणि । गुरूक्तमेव शास्त्रम् । गुरुकार्यं स्वयमेव कर्त्तव्यम् । गुरोरूर्ध्वे न तिष्ठेत् । गुरुच्छायालङ्घने दोषः । गुर्वाज्ञालङ्घने दोषः । आसनदाननियमः । वन्दनभेदः । नमस्यानमस्यपात्राणि । गुरुप्रणामकालनियमः । गुरुशाक्यादीनामपि गुरुत्वम् । ज्येष्ठचतुष्टयम् ।

## त्रयोदश उल्लासः

(Pages 293—307)

वर्ज्यशिष्यलक्षणम्। ग्राह्यशिष्यलक्षणम्। गुरुलक्षणम्। निराकारस्यापि शिवस्य गुरुरूपेणाकृतिग्रहणे हेतवः। श्रीगुरोर्ब्रह्मविष्णुशिवत्वम्। श्रीगुरोः शिवत्वे युक्तिः। गुरुशिवयोरभेदः। देवमन्त्रगुरूणामभेदः। श्रेष्ठगुरुलक्षणानि। प्रसङ्गेनाष्टपाशनामानि। पाशबद्धः पशुः पाशमुक्तः शिवः। प्रसङ्गेन मनसश्चतुर्विधावस्था। गुरुसान्निध्यात् पापादिक्षये दृष्टान्ताः। तत्त्वज्ञानं विना मोक्षप्रदानादौ न शक्तिः। सम्प्रदायभेदे गुरुसंख्या। षड्विधा गुरवः। पूर्णाभिषेककर्त्तुः पादुका पूजनीया। "गुरोर्गुर्वन्तरं व्रजेत्"।

## चतुर्दश उल्लासः

(Pages 308—319)

दीक्षां विना न मोक्षः। आचार्यं विना न दीक्षा। आचार्यपरम्परायां हेतुः। दीक्षितस्य इह परे शिवे योगः, देहान्ते शाश्वती मुक्तिः। मन्त्रोपदेशविधिः। अपरीक्ष्य दीक्षायां गुरुशिष्ययोः पिशाचत्वादिप्राप्तिः। अशास्त्रीयोपदेशे दोषः। समयदीक्षानन्तरमुपदेशः कार्यः। शिष्यपरीक्षाविधिः। योग्यशिष्यनिरूपणम्। शिष्यस्य गुरुपरीक्षणम्। अधमादिभेदेन शिष्याणां त्रैविध्यम्, तल्लक्षणानि च। उत्तमादिभेदेन उपदेशस्य त्रैविध्यम्, तेषामाकृतिकथनञ्च। स्पर्शाख्या दृक्संज्ञा मानसाख्याभेदेन देवीदीक्षायास्त्रैविध्यम्, तल्लक्षणानि च। शक्तिपातानुसारेण दीक्षा कार्या। क्रियावर्णादिभेदेन दीक्षा सप्तधा। तासु क्रियादीक्षा समयादिभेदेन अष्टधा। वर्णदीक्षा त्रिधा। कलादीक्षा त्रिधा। निवृत्त्यादिस्थितिस्थानानि। स्पर्शदीक्षा। वाग्दीक्षा। दृग्दीक्षा। तीव्रातीव्रतराभेदेन मनोदीक्षा द्विधा। तीव्रालक्षणम्। तीव्रतरालक्षणम्। आनन्दादिभेदेन वेधस्य षडवस्थाः। कौलिकीदीक्षालक्षणम्। गण्डूषाभिषेकः। शङ्खाभिषेकः। मीनकलशशब्दयो रूढशक्तिः। सिद्धाभिषेकः। पञ्चावस्थाः। पूर्णाभिषिक्तानां प्रशंसा। बाह्याभ्यन्तरभेदेन दीक्षा द्विविधा। अन्तर्बहिर्भेदेन द्विविधा शुद्धिः। आभ्यां विना कौलिकानां न मुक्तिः। कुलकुण्डलीदीक्षा एव

मुख्या। दीक्षया पशुपाशच्छेदः, मोक्षश्च। दीक्षया शिवत्वम्। दीक्षायाः शिवत्वदाने दृष्टान्तः। दीक्षासंस्कारसम्पन्ने जातिभेदो न विद्यते। दीक्षितस्य पूर्वत्वस्मृतौ दोषः। दीक्षितस्य तपःप्रभृतिकं कर्म निरर्थकम्। अदीक्षितानां जपपूजादिकं निष्फलम्। पूर्वदीक्षितस्यैव ज्येष्ठत्वम्। दीक्षायाः प्रागनुष्ठेयं कर्म। शूद्रादिजातीनां शुद्धिविधिः। अनुज्ञां विना दीक्षायां स्त्रीणां नाधिकारः।

## पञ्चदश उल्लासः

(Pages 320—332)

पुरश्चरणं जपात्मकम्। जपस्य श्रेष्ठत्वम्। तेन धर्मार्थादि साधनीयम्। पुरश्चरणस्य पञ्चाङ्गानि। एकमन्त्रसिद्धस्य सर्वमन्त्रसिद्धिः। न्यायलब्धमन्त्रः सिद्धः। भूतलिप्या पुटितमन्त्रस्य जपविधानम्। मन्त्रजपादौ मातृकावर्णजपस्यावश्यकता। गुरुलब्धमन्त्रः सर्वसिद्धिदः। अविधिप्राप्तमन्त्रो निरर्थकः। पुस्तकादिप्राप्तमन्त्रजपे दोषः। पुरश्चरणादौ प्रशस्तस्थानानि। स्थानभेदे पुरश्चरणफलतारतम्यम्। निषिद्धस्थानानि। दीपनाथपूजा कर्त्तव्या। त्याज्यासनानि। ग्राह्यासनानि। विहितासने जपार्चनादि कार्यम्। प्राणायामप्रकारः। प्रसङ्गेन शिवकुण्डलिनीयोगः। सगर्भागर्भदेन प्राणायामो द्विविधः। सगर्भप्राणायामस्योत्कर्षः। प्राणायामफलानि। न्यासादिपुरःसरमन्त्रजपः कार्यः। तदभावे दोषः। कल्पिताऽकल्पिताभेदेनाक्षमाला द्विविधा, तयोः स्वरूपञ्च। वस्तुभेदेन जपे फलतारतम्यम्। मालासंख्याभिः फलतारतम्यम्। जपे अङ्गुलीनियमः। कामनाभेदे अङ्गुलीनियमः। जपस्त्रिविधः। जपे प्रशस्तमन्त्रकथनम्। सूतकद्वयभङ्गः। मन्त्रार्थादिज्ञानं विना जपो निष्फलः। चैतन्यरहितमन्त्रो निष्फलः। सचैतन्यमन्त्रजापिनोऽवस्थाः। पारम्पर्यप्रमाणम्। मन्त्राणां षष्टिदोषाः। तज्ज्ञान विना जपे न सिद्धिः। मन्त्राणां दश संस्काराः। जपकाले प्रशस्तभक्ष्याणि। पुरश्चरणकाले परान्नं वर्जयेत्। सिद्धादिचक्रकथनम्। (अकथहचक्रम्)। सिद्धमन्त्रः। सिद्धसिद्धमन्त्रः। सिद्धसाध्यमन्त्रः। सिद्धसुसिद्धमन्त्रः। सिद्धारिमन्त्रः। साध्यसिद्धमन्त्रः। साध्यसाध्यमन्त्रः। साध्यसुसिद्धमन्त्रः। साध्यारिमन्त्रः। सुसिद्धसिद्धमन्त्रः। सुसिद्धसाध्यमन्त्रः। सुसिद्धसुसिद्धमन्त्रः। सुसिद्धारिमन्त्रः। अरिसिद्ध-

मन्त्रः। अरिसुसिद्धमन्त्रः। अरिरिपुमन्त्रः। सिद्धादीनां फलानि। नक्षत्रचक्रम्। नक्षत्राणां जन्मादिनवसंज्ञाः। राशिचक्रम्। द्वादशराशिषु लग्नादिस्थितिः। जन्मराशिनक्षत्रपरिज्ञाने विधिः। कुलाकुलचक्रम्। परस्परविरुद्धवर्णसंयोगे व्यवस्था। स्त्रीदत्तादिमन्त्रे सिद्धादिविचारो नास्ति। शिवशक्त्यादीनामसंयोगे जपो निरर्थकः। जपपूजान्यासादिषु विधिः। जपध्यानादियुक्तस्य क्षिप्रं मन्त्रसिद्धिः।

## षोडश उल्लासः

(Pages 333—346)

काम्यकर्मविधानम्। जपहोमादिपरिमाणकथनम्। सिद्धमन्त्रिणः परशिवत्वम्। सिद्धमन्त्रस्य षट्कर्मसिद्धिः। काम्यप्रयोगकर्तुर्न परलोकः। निष्कामयजनस्यैव प्राशस्त्यम्। दोषशान्त्याद्यर्थं चक्रपूजा। प्रयोगादौ साधकस्य ज्ञातव्यानि। स्त्रीपुंनपुंसकमन्त्राः। तेषां प्रबोधसमयाः। कामनाभेदेन बीजयोजना। यन्त्रपात्रनिर्णयः। गन्धदानद्रव्यनियमः। लेखनीविचारः। स्थाननियमः। निजरूप-भावना। पूजादिकं विना ध्यानभेदः। सात्त्विकध्यानजफलानि, साधन-प्रकारश्च। राजसध्यानजफलानि, साधनप्रकारश्च। तामसध्यान-जफलानि, साधनप्रकारश्च। शान्तिकर्म। वश्यकर्म, आकर्षणञ्च। राजादीनां वश्यादौ होमे समिद्विशेषाः। पराप्रासादमन्त्रविज्जीवन्मुक्तः। विशेषेणोच्चाटनमारणविधिः। शान्तिकादौ श्वेतवर्णादिभावना। सर्वकर्मसु आत्मरक्षार्थं महाषोढान्यासादिकं कर्त्तव्यम्। अनिष्टकारिणां विनाशसाधनम्।

## सप्तदश उल्लासः

(Pages 347—357)

श्रीगुरोः प्रार्थनामन्त्रः। गुरुः। आचार्यः। आराध्यः। देशिकः। स्वामी। महेश्वरः। श्रीनाथः। देवः। भट्टारकः। प्रभुः। योगी। संयमी। तपस्वी। अवधूतः। वीरः। कौलिकः। साधकः। भक्तः। शिष्यः। योगिनी। शक्तिः। पादुका। जपः। स्तोत्रम्। ध्यानम्। चरणम्। वेदः। पुराणम्। शास्त्रम्।

स्मृतिः। इतिहासः। आगमः। शाक्तः। कौलः। पारम्पर्यम्। सम्प्रदायः। आम्नायः। श्रौतः। आचारः। दीक्षा। अभिषेकः। उपदेशः। मन्त्रः। देवता। न्यासः। मुद्रा। अक्षमाला। मण्डलम्। कलशः। यन्त्रम्। आसनम्। मद्यम्। सुरा। अमृतम्। पात्रम्। आधारः। मांसम्। पूजा। अर्चनम्। तर्पणम्। गन्धः। आमोदः। अक्षतः। पुष्पम्। धूपः। दीपः। मोक्षदीपः। नैवेद्यम्। बलिः। तत्त्वत्रयम्। चलुकम्। प्रसादः। पानम्। उपास्तिः। पुरश्चरणम्। उपहारः। मृद्वासनम्। आवाहनम्। स्थापनम्। सन्निधापनम्। सन्निरोधनम्। सकलीकृतिः। अवगुण्ठनम्। अमृतीकरणम्। परमीकरणम्। गतम्। पाद्यम्। आचमनीयम्। अर्घ्यम्। अष्टाङ्गार्घ्यम्। मधुपर्कः। स्नानम्। वन्दनम्। क्षेत्रम्। क्षेत्रपालः। पूजकः। पशुगेहे पुस्तकस्थापननिषेधः, तत्समीपे पाठनिषेधश्च। पुस्तकस्य नित्यं पूजा। ऊर्ध्वाम्नायमाहात्म्यपाठश्रवणयोः फलम्।

समाप्तमिदं सूचीपत्रम्।

ॐ

# श्रीकुलार्णवतन्त्रम्

## प्रथम उल्लासः

कैलासशिखरासीनं देवदेवं जगद्गुरुम् । ॥ १ ॥
पप्रच्छेशं परानन्दं पार्वती परमेश्वरम् *

श्रीदेव्युवाच ।

भगवन् देवदेवेश पञ्चक्रतुविधायक[1] । ॥ २ ॥
सर्वज्ञ भक्तिसुलभ शरणागतवत्सल
कुलेश परमेशान करुणामृतवारिधे । ॥ ३ ॥
असारे घोरसंसारे सर्वदुःखमलीमसाः[2]
नानाविधशरीरस्था अनन्ता[3] जीवराशयः । ॥ ४ ॥
जायन्ते च म्रियन्ते च[4] तेषां मोक्षो[5] न विद्यते
सदा दुःखातुरा[6] देव न सुखी विद्यते क्वचित् । ॥ ५ ॥
केनोपायेन देवेश मुच्यते वद मे प्रभो

श्रीईश्वर उवाच ।

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि । ॥ ६ ॥
तस्य श्रवणमात्रेण संसारात्[7] मुच्यते नरः

* ख, ग, घ, ङ पुस्तके नास्ति ।
1. ख, पञ्चक्रतुविधानक; घ, ङ, पञ्चकृत्यविधायक ।
2. ख, मलीमसे ।
3. ख, आतता ।
4. क, ग, विलीयन्ते ।
5. क, ख, ग, ङ, तेषामन्तो ।
6. क, घोरदुःखोद्भवा; ख, घोरदुःखभवाब्धौ च; ङ, घोर-दुःखातुरा ।
7. ङ, संशयात् ।

अस्ति देवि परब्रह्मस्वरूपी निष्कलः शिवः ।
सर्वज्ञः सर्वकर्त्ता च सर्वेशो निर्मलोऽद्वयः[1] ॥ ७ ॥
स्वयं[2] ज्योतिरनाद्यन्तो निर्विकारः परात् परः ।
निर्गुणः सच्चिदानन्दस्तदंशा जीवसंज्ञकाः ॥ ८ ॥
अनाद्यविद्योपहिता[3] यथाग्नौ विस्फुलिङ्गकाः ।
गर्भाद्युपाधिसंभिन्नाः कर्मभिः करणादिभिः[4] ॥ ९ ॥
सर्वः[5] दुःखप्रदैः स्वीयपुण्यपापैर्नियन्त्रिताः ।
तत्तज्जातियुतं देहम् आयुर्भोगञ्च कर्मजम् ॥ १० ॥
प्रतिजन्म प्रपद्यन्ते मानुषा मूढचेतसः[6] ।
सूक्ष्मलिङ्गशरीरन्तदामोक्षादक्षयं प्रिये ॥ ११ ॥
स्थावराः क्रिमयश्चाब्जाः[7] पक्षिणः[8] पशवो नराः ।
धार्म्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च यथाक्रमम् ॥ १२ ॥
चतुर्विधशरीराणि धृत्वा धृत्वा सहस्रशः[9] ।
सुकृतान्मानवो[10] भूत्वा ज्ञानी चेन्मोक्षमाप्नुयात् ॥ १३ ॥
चतुरशीतिलक्षेषु शरीरेषु शरीरिणाम् ।
न मानुष्यं विनान्यत्र तत्त्वज्ञानन्तु लभ्यते ॥ १४ ॥
अत्र जन्मसहस्रेषु सहस्रैरपि पार्वति ।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥ १५ ॥
सोपानभूतं[11] मोक्षस्य मानुष्यं प्राप्य दुर्लभम् ।
यस्तारयति[12] नात्मानं तस्मात् पापतरोऽत्र कः ॥ १६ ॥

---

1. क, ग, निर्मलोदयः ; ङ, निर्मलाशयः । 2. ङ, अयं ।
3. ख, अत्यन्तायाससहिता ; ङ, असत्यविद्योपहता ।
4. क, सर्वाद्युपाधिसंभिन्नाः कर्म्मभिस्तैरनादिभिः ; ख, घ, सर्व्वेऽप्युपाधिसंभिन्नास्ते कर्म्मभिरनादिभिः ; ङ, सर्व्वाद्युपाधिभिन्नास्ते कर्म्मादिभिरनादिभिः ।
5. ङ, सुख । 6. क, ङ, तेषामन्तो न विद्यते ।
7. ख, घ, क्रिमयश्चाज्ञाः । 8. घ, व्योमगाः ।
9. क, घ, सूक्ष्माणि भूरिशः । 10. ग, सुकृतात्मा नरः ।
11. क, भूरि । 12. ग, सम्भावयति ।

ततश्चाप्युत्तमं जन्म लब्ध्वा चेन्द्रियसौष्ठवम् ।
न वेत्त्यात्महितं यस्तु स भवेत् आत्म[1]घातकः ॥ १७ ॥
विना देहेन कस्यापि पुरुषार्थो न विद्यते ।
तस्माद्देहधनं प्राप्य[2] पुण्यकर्माणि साधयेत् ॥ १८ ॥
रक्षेत् सर्वात्मनात्मानम् आत्मा सर्वस्य भाजनम् ।
रक्षणे यत्नमातिष्ठेत् यावत्तत्त्वं न पश्यति ॥ १९ ॥
पुनर्ग्रामाः पुनः क्षेत्रं पुनर्वित्तं पुनर्गृहम् ।
पुनः शुभाशुभं कर्म न शरीरं पुनः पुनः ॥ २० ॥
शरीररक्षणायासः क्रियते सर्वदा जनैः ।
नहीच्छन्ति तनुत्यागमपि कुष्ठादिरोगतः[3] ॥ २१ ॥
तद्गोपितं स्याद् यत्नेन[4] धर्मो ज्ञानार्थमेव[5] च ।
ज्ञानञ्च ध्यानयोगार्थं[6] सोऽचिरात् परिमुच्यते ॥ २२ ॥
आत्मैव[7] यदि नात्मानमहितेभ्यो निवारयेत् ।
कोऽन्यो हितकरस्तस्मादात्मानं तारयिष्यति ॥ २३ ॥
इहैव नरकव्याधेश्चिकित्सां न करोति यः ।
गत्वा निरौषधं स्थानं व्याधिस्थः[8] किं करिष्यति ॥ २४ ॥
सनाद[9]भवने को वा कूपं खनति दुर्म्मतिः ।
यावत्तिष्ठति देहोऽयं तावत्तत्त्वं समभ्यसेत् ॥ २५ ॥
व्याघ्रीवास्ते जरा चायुर्याति भिन्नघटाम्बुवत् ।
निघ्नन्ति रिपुवद्रोगास्तस्माच्छ्रेयः समाचरेत् ॥ २६ ॥
यावन्नाश्रयते दुःखं यावन्नायान्ति चापदः ।
यावन्नेन्द्रियवैकल्यं तावच्छ्रेयः समाचरेत् ॥ २७ ॥

---

1. ङ, ब्रह्म । 2. ग, घ, ङ, रक्ष्य । 3. ङ, रोगिणः ।
4. क, ख, ग, घ, नष्टेऽपि तस्य धर्म्मार्थी ।
5. ङ, धर्म्मज्ञानार्थमेव । 6. घ, ङ, ध्यानयोगश्च ।
7. क, अथैव; ङ, प्रागेव । 8. ङ, नीरुजः ।
9. ख, घ, सुदीप्तभवने; ङ, सन्दीप्ते ।

कालो न ज्ञायते नानाकार्य्यैः संसारसम्भवैः ।
सुखदुःखरतो जन्तुर्न[1] वेत्ति हितमात्मनः ॥ २८ ॥
जडानार्त्तान्मृतानापद्गतान्[2] दृष्ट्वाऽतिदुःखितान् ।
लोको मोहसुरां पीत्वा न बिभेति कदाचन[3] ॥ २९ ॥
सम्पदः स्वप्नसङ्काशा यौवनं कुसुमोपमम् ।
तडिच्चञ्चलमायुश्च कस्य स्याज्जानतो धृतिः[4] ॥ ३० ॥
शतं जीवितमत्यल्पं[5] निद्रा स्यादर्द्धहारिणी ।
बाल्यरोगजरादुःखैरर्द्धं तदपि निष्फलम् ॥ ३१ ॥
प्रारब्धव्ये निरुद्वेगो[6] जागर्त्तव्ये सुषुप्तकः ।
विश्वस्तव्यो भयस्थाने घातकैः किं न[7] हन्यते ॥ ३२ ॥
तोयफेनसमे देहे जीवे शकुनिवत् स्थिते[8] ।
अनित्येऽप्रियसंसारे[9] कथं तिष्ठन्ति निर्भयाः ॥ ३३ ॥
अहिते हितबुद्धिः स्यादध्रुवे ध्रुवचिन्तकः ।
अनर्थे चार्थविज्ञानी स्वमृत्युं यो न वेत्ति च[10] ॥ ३४ ॥
पश्यन्नपि न पश्येत् स[11] शृण्वन्नपि न बुध्यति ।
पठन्नपि न जानाति तव मायाविमोहितः ॥ ३५ ॥

---

1. क, सुखदुःखभवोद्भूतः ; ख, सुखदुःखभवे भूतः ; घ, समदुःखभावभूतः ; ङ, सुखदुःखैर्जनो हन्ति ।

2. क, ङ, यातनार्त्तानापद्गतान् ; ग, घ, जातानार्त्तान् मृतान्वाऽनागतान् ।

3. ङ, वेत्ति हितमात्मनः । 4. ङ, कस्मादतो धृतिः ।

5. ङ, शतं जीवितमित्थञ्च ; ख, शतं जीवति यद्यल्पं निद्रालस्यार्द्धहारिणी ।

6. क, प्रारब्धैर्व्याधिरुद्वेगः ; ख, प्रारब्धाज्जनिरुक्कृच्छ्राज्जागर्त्तव्यः सुषुप्तके ; ग, घ, प्रारब्धे व्याधिरुद्वेगः ।

7. ङ, हा नरः केन ।

8. ख, शोकव्यवस्थिते ।

9. ख, ग, घ, प्रियसंवादे ।

10. ङ, स मृत्युं न हि वेत्ति किम् ।

11. क, ग, घ, प्रस्खलति, ख, न जानीते ।

सन्निमज्जज्जगदिदं[1] गम्भीरे कालसागरे।
मृत्युरोगजराग्राहे[2] न किञ्चिदपि बुध्यति ॥ ३६ ॥
प्रतिक्षणमयं कायो जीर्यमाणो न लक्ष्यते[3]।
आमकुम्भ इवाम्भःस्थो विशीर्णो नैव भाव्यते ॥ ३७ ॥
युज्यते वेष्टनं[4] वायोराकाशस्य च खण्डनम्।
ग्रथनञ्च तरङ्गाणामास्था नायुषि युज्यते ॥ ३८ ॥
पृथिवी दह्यते येन मेरुश्चापि विशीर्यते।
शुष्यते सागरजलं शरीरे देवि का कथा ॥ ३९ ॥
अपत्यं मे कलत्रं मे धनं मे बान्धवाश्च मे[5]।
लपन्तमिति मर्त्यं हि हन्ति कालवृको बलात्[6] ॥ ४० ॥
इदं कृतमिदं कार्य्यमिदमन्यत् कृताकृतम्।
एवमीहासमायुक्तं मृत्युरत्ति जनं प्रिये ॥ ४१ ॥
श्वःकार्य्यमद्य कर्त्तव्यं पूर्वाह्णे चापराह्णिकम्।
न हि प्रतीक्षते मृत्युः कृतं वाऽस्य न वा कृतम्[7] ॥ ४२ ॥
जरादर्शितपन्थानं प्रचण्डव्याधिसैनिकम्।
मृत्युशत्रुमभिज्ञोऽसि आयान्तं[8] किं न पश्यसि ॥ ४३ ॥
आशा[9]सूचीविनिर्भिन्नं सिक्तं[10] विषयसर्पिषा।
रागद्वेषानले पक्वं मृत्युरश्नाति मानवम् ॥ ४४ ॥
बालांश्च यौवनस्थांश्च वृद्धान् गर्भगतानपि[11]।
सर्वान् संविशते[12] मृत्युरेवम्भूतमिदं जगत् ॥ ४५ ॥

---

1. क, ख, ग, घ, शक्तिमग्नं जगदिदं। 2. ङ, महाग्राहे।
3. ङ, निरीक्ष्यते 4. क, ख, ग, घ, न बन्धो युज्यते।
5. ख, वाञ्छितञ्च मे। 6. ग, वृको यथा; ङ, वृकोदरः।
7. ङ, कृतं वाप्यथ वाऽकृतम्।
8. क, मृत्युशत्रुसमज्ञानमायातं; ग, अहो मृत्युसमादिष्टं; ङ, मृत्युशक्रसमादिष्टं।
9. ङ, कृष्ण। 10. क, घ, इच्छा; ख, ईहा; ङ, मिश्रं।
11. ख, रोगगतानपि।
12. ख, सर्व्वांश्च हिंसते; ग, घ, आविशते; ङ, आदिशते।

ब्रह्मविष्णुमहेशादिदेवता भूतजातयः[1] ।
नाशमेवानुधावन्ति[2] तस्माच्छ्रेयः समाचरेत् ॥ ४६ ॥
स्वस्ववर्णाश्रमाचारलङ्घनाद्दुष्प्रतिग्रहात् ।
परस्त्रीधनलोभाच्च नृणामायुःक्षयो भवेत् ॥ ४७ ॥
वेदशास्त्राद्यनभ्यासात्तथैव गुर्वनर्चनात्[3] ।
नृणामायुःक्षयो भूयादिन्द्रियाणामनिग्रहात् ॥ ४८ ॥
व्याधिराधिर्विषं शस्त्रं ना[4] सर्पः पशवो मृगाः ।
मरणं[5] येन निर्दिष्टं तेन गच्छन्ति जन्तवः ॥ ४९ ॥
जीवस्तृणजलौकेव देहाद्देहान्तरं व्रजेत् ।
सम्प्राप्य परमंशेन[6] देहं त्यजति पूर्वजम् ॥ ५० ॥
बाल्ययौवनवृद्धत्वं यथा देहान्तरादिकम् ।
तथा देहान्तरप्राप्तिर्गृहाद्गृहमिवागतः ॥ ५१ ॥
जनाः कृत्वेह कर्माणि सुखदुःखानि भुञ्जते ।
परत्राज्ञानिनो[7] देवि यान्त्यायान्ति पुनः पुनः ॥ ५२ ॥
इह यत्[8] क्रियते कर्म तत् परत्रोपभुज्यते ।
सिक्तमूलस्य वृक्षस्य फलं शाखासु दृश्यते ॥ ५३ ॥
दारिद्र्यदुःखरोगाश्च बन्धनव्यसनानि च ।
आत्मापराधवृक्षस्य फलान्येतानि देहिनाम् ॥ ५४ ॥
निःसङ्ग एव मोक्षः स्याद्दोषाः सर्वे च सङ्गजाः ।
तस्मात् सङ्गं परित्यज्य तत्त्वनिष्ठः सुखी भवेत् ।
सङ्गाच्च चलते ज्ञानी चावश्यं किमुताल्पवित्[9] ॥ ५५ ॥

---

1. ख, घ, राशयः । 2. ख, घ, सर्व्वे नाशं प्रयास्यन्ति ।
3. ग, घ, गुरुवञ्चनात् । 4. क, ख, ग, घ, क्षुत् ।
5. ख, निर्याणं ; ग, घ, ड, निर्वाणं ।
6. क, ख, घ, उत्तरं देहं ; ग, उत्तरमेवैनं ।
7. ङ, परत्र हानितः । 8. ग, घ, इहैव ।
9. क, ग, घ, सङ्गात् पतत्यधो ज्ञानी चावश्य किमनात्मवित् ; ख, किमुतानात्मवित् प्रिये ।

सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते ।
सद्भिः सह स कर्त्तव्यः सतां सङ्गो हि भेषजम् ॥ ५६ ॥
सत्सङ्गश्च विवेकश्च निर्मलं[1] नयनद्वयम् ।
यस्य नास्ति नरः सोऽन्धः कथं न स्यादमार्गगः[2] ॥ ५७ ॥
यावतः कुरुते जन्तुः सम्बन्धान्मनसः प्रियान्[3] ।
तावन्तोऽस्य विशन्त्येते[4] हृदये शोकशङ्कवः ॥ ५८ ॥
स्वदेहमपि जीवोऽयं त्यक्त्वा याति कुलेश्वरि[5] ।
स्त्रीमातृपितृपुत्रादिसम्बन्धः केन हेतुना ॥ ५९ ॥
दुःखमूलो हि संसारः स यस्यास्ति स दुःखितः ।
तस्य त्यागः कृतो येन स सुखी नापरः प्रिये ॥ ६० ॥
प्रभवं[6] सर्वदुःखानामाश्रयं सकलापदाम् ।
आलयं सर्वपापानां संसारं वर्जयेत् प्रिये ॥ ६१ ॥
अबन्धबन्धनं[7] घोरं मिश्रीकृत[8]महाविषम् ।
अशस्त्रखण्डनं देवि संसारासक्तचेतसाम् ॥ ६२ ॥
आदिमध्यावसानेषु सर्व्वं दुःखमिदं यतः[9] ।
तस्मात् सन्त्यज्य संसारं तत्त्वनिष्ठः सुखी भवेत् ॥ ६३ ॥
लौहदारुमयैः पाशैर्दृढबन्धोऽपि मुच्यते ।
स्त्रीधनादिषु संसक्तो[10] मुच्यते न कदाचन ॥ ६४ ॥
कुटुम्बचिन्तायुक्तस्य श्रुत[11]शीलादयो गुणाः ।
अपक्वकुम्भजलवत् नश्यन्त्यङ्गेन केवलम्[12] ॥ ६५ ॥
वञ्चिताशेषवित्तै[13]स्तैर्नित्यं लोको विनाशितः[14] ।
हा हन्त विषयाहारैर्देहस्थेन्द्रियतस्करैः ॥ ६६ ॥

---

1. ङ, निश्चलं । 2. क, ग, घ, अधर्म्मगः ।
3. ग, विषयस्पृहान् । 4. ङ, निखन्यन्ते । 5. ङ, सुरेश्वरि ।
6. ग, आरम्भः । 7. ख, घ, अरज्जुबन्धनं । 8. क, मिश्रीकृत्य ।
9. ङ, जगत् । 10. ख, संयुक्तः । 11. क, ग, घ, श्रुति ।
12. ङ, तेन हि । 13. क, ग, घ, चित्तैः ; ङ, वाञ्छिताशेषचित्तैः ।
14. क, विनश्यति ।

मांसलुब्धो यथा मत्स्यो लौहशङ्कुं न पश्यति ।
सुखलुब्धस्तथा देही यमबाधां[1] न पश्यति ॥ ६७ ॥
हिताहितं न जानन्तो नित्यमुन्मार्गगामिनः ।
कुक्षिपूरणनिष्ठा ये तेऽबुधा नारकाः प्रिये ॥ ६८ ॥
निद्रादिमैथुनाहाराः सर्वेषां प्राणिनां समाः ।
ज्ञानवान् मानवः प्रोक्तो ज्ञानहीनः पशुः प्रिये ॥ ६९ ॥
प्रभाते मलमूत्राभ्यां क्षुत्तृड्भ्यां मध्यगे रवौ ।
रात्रौ मदननिद्राभ्यां बाध्यन्ते[2] मानवाः प्रिये ॥ ७० ॥
स्वदेहधर्म्मदारादिनिरताः सर्वजन्तवः ।
जायन्ते च म्रियन्ते च हा हन्ताज्ञानमोहिताः ॥ ७१ ॥
स्वस्ववर्णाश्रमाचारनिरताः सर्वमानवाः ।
न जानन्ति परं तत्त्वं[3] मूढा[4] नश्यन्ति पार्वति ॥ ७२ ॥
क्रियायासपराः केचित् क्रतुचर्य्यादि[5]संयुताः ।
अज्ञानसंयुता[6]त्मानः सञ्चरन्ति प्रतारकाः[7] ॥ ७३ ॥
नाममात्रेण सन्तुष्टाः कर्म्मकाण्डरता नराः ।
मन्त्रोच्चारणहोमाद्यैर्भ्रामिताः क्रतुविस्तरैः ॥ ७४ ॥
एकभक्तोपवासाद्यैर्नियमैः कायशोषणैः ।
मूढाः परोक्षमिच्छन्ति तव[8] मायाविमोहिताः ॥ ७५ ॥
देहदण्डनमात्रेण का मुक्ति[9]रविवेकिनाम् ।
वल्मीकताडनाद्देवि मृतः किन्नु महोरगः ॥ ७६ ॥
धनाहारार्जने युक्ता[10] दाम्भिका वेषधारिणः ।
भ्रमन्ति ज्ञानिवल्लोके[11] भ्रामयन्ति जनानपि ॥ ७७ ॥

---

1. ङ, मायाशीलं । 2. ग, युज्यन्ते । 3. ख, ग, धर्म ।
4. क, ख, ग, घ, वृथा । 5. ग, व्रतचर्य्यादि ; ङ, व्रतधर्म्मादि ।
6. क, संहतात्मानः ; ङ,संभृतात्मानः । 7. ङ, प्रभाकराः ।
8. क, घ, मम । 9. ङ, सिद्धि । 10. ङ, धनार्जनोपयुक्तास्ते ।
11. ङ, लुब्धा ।

सांसारिकसुखासक्तं ब्रह्मज्ञोऽस्मीति वादिनम् ।
कर्मब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं यथा ॥ ७८ ॥
गृहारण्यसमा लोके गतव्रीडा दिगम्बराः ।
चरन्ति गर्दभाद्याश्च योगिनस्ते[1] भवन्ति किम् ॥ ७९ ॥
मृद्भस्मप्रक्षणाद्देवि मुक्ताः स्युर्यदि मानवाः ।
मृद्भस्मवासिनो ग्राम्याः किन्ते मुक्ता भवन्ति हि ॥ ८० ॥
तृणपर्णोदकाहाराः सततं[2] वनवासिनः ।
हरिणादिमृगा देवि योगिन[3] स्ते भवन्ति किम् ॥ ८१ ॥
आजन्ममरणान्तञ्च गङ्गादितटिनीस्थिताः[4] ।
मण्डूक[5]मत्स्यप्रमुखा व्रतिनस्ते भवन्ति किम् ॥ ८२ ॥
वदन्ति हृदयानन्दं पठन्ति शुकसारिकाः ।
जनानां[6] पुरतो देवि विबुधाः किं भवन्ति हि * ॥ ८३ ॥
पारावताः शिलाहाराः परमेश्वरि चातकाः ।
न पिबन्ति महीतोयं योगिनस्ते भवन्ति किम् ॥ ८४ ॥
शीतवातातपसहा भक्ष्याभक्ष्यसमाः[7] प्रिये ।
तिष्ठन्ति शूकराद्याश्च योगिनस्ते भवन्ति किम् ॥ ८५ ॥
तस्मादित्यादिकं कर्म लोकवञ्चनकारकम्[8] ।
मोक्षस्य कारणं साक्षात्तत्त्वज्ञानं कुलेश्वरि ॥ ८६ ॥
षड्दर्शनमहाकूपे पतिताः पशवः प्रिये ।
परमार्थं[9] न जानन्ति पशुपाशनियन्त्रिताः ॥ ८७ ॥

---

* क पुस्तके श्लोकोऽयं नास्ति ।

1. ङ, विविक्तास्ते । 2. ग, चरन्ति । 3. ग, ङ, तापसाः ।

4. क, ख, घ, गङ्गातीरं समाश्रिताः; ग, गङ्गानीरं ।

5. ग, मण्डूकमत्स्यकुम्भीराः; ङ, मातङ्ग ।

6. ङ, तत्रैव । 7. ङ, जम्बालाश्मशयाः ।

8. क, शीतवातातपस्तस्मादित्यादिरञ्जकारकम्; घ, ङ, लोकरञ्जनकारकम् ।

9. ख, परात्मानं ।

वेदशास्त्रार्णवे घोरे ताडयमाना[1] इतस्ततः ।
कालोर्मिग्राहग्रस्ताश्च[2] तिष्ठन्ति हि कुतार्किकाः ॥ ८८ ॥
वेदागमपुराणज्ञः परमार्थं[3] न वेत्ति यः ।
विडम्बकस्य तस्यापि[4] तत् सर्वं काकभाषितम्[5] ॥ ८९ ॥
इदं ज्ञानमिदं ज्ञेयमिति चिन्तासमाकुलाः ।
पठन्त्यहर्निशं देवि परतत्त्वपराङ्मुखाः ॥ ९० ॥
वाक्य[6]च्छन्दोनिबन्धेन काव्यालङ्कारशोभिना[7] ।
चिन्तया दुःखिता मूढास्तिष्ठन्ति व्याकुलेन्द्रियाः ॥ ९१ ॥
अन्यथा परमं तत्त्वं[8] जनाः क्लिश्यन्ति चान्यथा ।
अन्यथा शास्त्रसद्भावो[9] व्याख्यां कुर्वन्ति चान्यथा ॥ ९२ ॥
कथयन्त्युन्मनीभावं[10] स्वयं नानुभवन्ति हि ।
अहङ्कारहताः केचिदुपदेशविवर्जिताः[11] ॥ ९३ ॥
पठन्ति वेदशास्त्राणि विवदन्ति परस्परम् ।
न जानन्ति परं तत्त्वं दर्वी पाकरसं यथा ॥ ९४ ॥
शिरो वहति पुष्पाणि गन्धं जानाति नासिका ।
पठन्ति वेदशास्त्राणि दुर्लभो भाववेदकः ॥ ९५ ॥
तत्त्वमात्मस्थमज्ञात्वा मूढः शास्त्रेषु मुह्यति[12] ।
गोपः कक्षगतं छागं कूपे पश्यति दुर्मतिः ॥ ९६ ॥
संसार[13]मोहनाशाय शाब्दबोधो न हि क्षमः ।
न निवर्त्तेत तिमिरं कदाचिद्दीपवार्त्तया[14] ॥ ९७ ॥

---

1. क, ख, ईडयमानाः; ग, मग्ना दह्यमानाः; ङ, वेदार्थमपरिज्ञाय दह्यमानाः ।
2. क, ग, घ, ङ, कालोर्मिणा ग्रहग्रस्तः ।
3. क, ख, घ, पराम्नायं ।
4. ख, विण्मूलञ्च ततस्तस्मात् ।
5. क, ख, ग, घ, भोजनं ।
6. ङ, काव्य ।
7. ङ, शोभिता ।
8. ख, घ, परमं भावं ।
9. ख, सम्भावो ।
10. ख, कथं यान्त्युन्मनीभावं ।
11. क, घ, उपदेशादिवर्जिताः ।
12. ख, युज्यते ।
13. ङ, मात्र ।
14. ङ, दीपशिखया ।

प्रज्ञाहीनस्य पठनम् अन्धस्यादर्शदर्शनम्[1] ।
देवि प्रज्ञावतः शास्त्रं तत्त्वज्ञानस्य कारणम् ॥ ९८ ॥
अग्रतः पृष्ठतः केचित् पार्श्वयोरपि केचन ।
तत्त्वमीदृक् तादृगिति विवदन्ति परस्परम् ।
सद्विद्यादानशूराद्यैर्गुणैर्विख्यातमानवाः* ॥ ९९ ॥
प्रत्यक्षग्रहणं नास्ति वार्त्तया[2] ग्रहणं कुतः[3] ।
एवं ये शास्त्रसम्मूढास्ते दूरस्था न संशयः ॥ १०० ॥
इदं ज्ञानमिदं ज्ञेयं सर्वतः श्रोतुमिच्छति ।
देवि वर्षसहस्रायुः[4] शास्त्रान्तं नैव गच्छति ॥ १०१ ॥
वेदाद्य[5]नेकशास्त्राणि स्वल्पायुर्विघ्नकोटयः ।
तस्मात् सारं विजानीयात् क्षीरं हंस इवाम्भसः ॥ १०२ ॥
अभ्यस्य सर्वशास्त्राणि तत्त्वं ज्ञात्वा हि बुद्धिमान् ।
पलालमिव धान्यार्थी सर्वशास्त्रं परित्यजेत् ॥ १०३ ॥
यथामृतेन तृप्तस्य नाहारेण प्रयोजनम् ।
तत्त्वज्ञस्य तथा देवि न शास्त्रेण प्रयोजनम् ॥ १०४ ॥
न वेदाध्ययनान्मुक्तिर्न शास्त्रपठनादपि ।
ज्ञानादेव हि मुक्तिः स्यान्नान्यथा वीरवन्दिते ॥ १०५ ॥
नाश्रमाः[6] कारणं मुक्तेर्दर्शनानि न कारणम् ।
तथैव सर्वशास्त्राणि[7] ज्ञानमेव हि कारणम् ॥ १०६ ॥
मुक्तिदा गुरुवागेका[8] विद्याः सर्वा विडम्बकाः ।
काष्ठभारश्रमादस्मा[9]देकं सञ्जीवनं परम् ॥ १०७ ॥

---

* ख पुस्तके इतः परम् ईदृशस्तादृशश्चेति दूरस्थः कथ्यते जनैः । इति श्लोकार्द्धमधिकम् ॥

1. क, ख, घ, ङ, दर्शनं यथा । 2. घ, परोक्ष ।
3. ग, ङ, प्रिये । 4. क, ग, ङ, सहस्रैस्तु । 5. ग, विदन्त्य ।
6. ङ, न वेदाः । 7. ग, ज्ञानिनो ज्ञानमाश्चर्य्यं ।
8. क, गुरुभावैका ; ख, तत्त्वभावैका ।
9. ख, काष्ठादिकारणं यस्मात् ।

अद्वैतन्तु शिवेनोक्तं क्रियायासविवर्जितम् ।
गुरुवक्त्रेण लभ्येत नान्यथा[1]गमकोटिभिः ॥ १०८ ॥
आगमोत्थं विवेकोत्थं द्विधा ज्ञानं प्रचक्षते ।
शब्दब्रह्मागममयं परं ब्रह्म विवेकजम् ॥ १०९ ॥
अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे ।
मम तत्त्वं न जानन्ति द्वैताद्वैतविवर्जितम् ॥ ११० ॥
द्वे पदे बन्धमोक्षाय ममेति निर्ममेति च ।
ममेति बाध्यते[2] जन्तुर्न ममेति विमुच्यते ॥ १११ ॥
तत् कर्म यन्न बन्धाय विद्या सा या विमुक्तये ।
आयासायापरं कर्म विद्यान्या शिल्पनैपुणम् ॥ ११२ ॥
यावत् कामादि दीप्येत यावत् संसारवासना ।
यावदिन्द्रियचापल्यं तावत्तत्त्वकथा कुतः ॥ ११३ ॥
यावत् प्रयत्नवेगोऽ[3]स्ति यावत् सङ्कल्पकल्पना ।
यावन्न मनसः स्थैर्य्यं तावत्तत्त्वकथा कुतः ॥ ११४ ॥
यावद्देहाभिमानश्च ममता यावदस्ति हि ।
यावन्न गुरुकारुण्यं तावत्तत्त्वकथा कुतः ॥ ११५ ॥
ताव[4]त्तपो व्रतं तीर्थं जपहोमार्च्चनादिकम् ।
वेदशास्त्रागमकथा यावत्तत्त्वं[5] न विन्दते ॥ ११६ ॥
तस्मात् सर्वप्रयत्नेन सर्वावस्थासु सर्वदा ।
तत्त्वनिष्ठो भवेद्देवि यदीच्छेन्मोक्ष[6]मात्मनः ॥ ११७ ॥
धर्मज्ञानसुपुष्पस्य[7] स्वर्गलोक[8]फलस्य च ।
तापत्रयार्त्तिसन्तप्तश्छायां मोक्ष[9]तरोः श्रयेत् ॥ ११८ ॥

1. ङ, नाधीता ।
2. क, ग, घ, बाधते ; ख, बुध्यते ।
3. घ, ङ, रोगः ।
4. ङ, यावत् ।
5. ङ, तावत्तत्त्वकथा कुतः ।
6. ख, ङ, सिद्धि ।
7. ङ, खपुष्पस्य ।
8. ङ, स्वकुलोक्तफलस्य ।
9. ङ, कल्पतरोः ।

बहुनात्र किमुक्तेन रहस्यं शृणु पार्वति ।
कुलधर्ममृते[1] मुक्तिर्नास्ति सत्यं न संशयः ॥ ११९ ॥
तस्माद्वदामि तत्त्वन्ते विज्ञाय श्रीगुरोर्मुखात् ।
सुखेन मुच्यते देवि घोरसंसारबन्धनात्[2] ॥ १२० ॥
इति ते कथिता काचिज्जीवजाति[3]स्थितिः प्रिये ।
समासेन कुलेशानि किं भूयः श्रोतुमिच्छसि ॥ १२१ ॥

इति श्रीकुलार्णवे महारहस्ये सर्वागमोत्तमोत्तमे
सपादलक्षग्रन्थे पञ्चमखण्डे ऊर्द्ध्वाम्नाय-
तन्त्रे जीवस्थितिकथनं नाम
प्रथम उल्लासः ॥ १ ॥

---

1. क, ख, घ, घोरसंसारसागरात् ।
2. ङ, कुलमार्गादृते ।
3. क, ख, ग, जीवज्ञान; घ, जीवज्ञानस्थितेः ।

# द्वितीय उल्लासः।

श्रीदेव्युवाच।

कुलेश श्रोतुमिच्छामि सर्वजीवदयानिधे।
कुलधर्मस्त्वया देव सूचितो न प्रकाशितः ॥ १ ॥
तस्य धर्मस्य माहात्म्यं सर्वधर्मोत्तमस्य च।
ऊर्द्ध्वाम्नायस्य माहात्म्यं तन्मतं वद मे प्रभो*।
वद मे परमेशान यदि तेऽस्ति[1] कृपा मयि ॥ २ ॥

श्रीईश्वर उवाच।

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि।
तस्य श्रवणमात्रेण योगिनीनां प्रियो भवेत् ॥ ३ ॥
ब्रह्मविष्णुगुहादीनां[2] न मया कथितं पुरा[3]।
कथयामि तव स्नेहात् शृणुष्वैकाग्रमानसा[4] ॥ ४ ॥
पारम्पर्य्यक्रमायातं पञ्चवक्त्रेषु[5] संस्थितम्।
अकथ्यं परमार्थेन तथापि कथयामि ते ॥ ५ ॥
त्वयापि गोपितव्यं हि न देयं यस्य कस्यचित्।
देयं भक्ताय शिष्याय अन्यथा पतनं भवेत्[6] ॥ ६ ॥
सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम्।
वैष्णवादुत्तमं शैवं शैवाद्दक्षिणमुत्तमम् ॥ ७ ॥

---

* ख पुस्तके पद्यार्द्धमिदमधिकं दृश्यते।

1. ङ, चास्ति। 2. ङ, गुहादिभ्यः। 3. ङ, प्रिये।
4. क, ख, ग, एकाग्रचेतसा; घ, एकाग्रचेतना।
5. ङ, वक्त्राद्वक्त्रेषु। 6. ख, मृत्युमाप्नुयात्।

दक्षिणाद्धुत्तमं वामं वामात् सिद्धान्तमुत्तमम्* ।
सिद्धान्ताद्धुत्तमं कौलं कौलात् परतरं न हि ॥ ८ ॥
गुह्याद् गुह्यतरं देवि सारात् सारं परात् परम् ।
साक्षात् शिवपदं[1] देवि कर्णाकर्णिगतं[2] कुलम् ॥ ९ ॥
मथित्वा ज्ञानदण्डेन[3] वेदागममहार्णवम् ।
सारज्ञेन[4] मया देवि कुलधर्मः समुद्धृतः ॥ १० ॥
एकतः सकला धर्मा[5] यज्ञतीर्थव्रतादयः ।
एकतः कुलधर्मश्च तत्र[6] कौलोऽधिकः प्रिये ॥ ११ ॥
प्रविशन्ति यथा नद्यः समुद्रम् ऋजुवक्रगाः ।
तथैव समयाः सर्वे[7] प्रविष्टाः कुलमेव हि ॥ १२ ॥
यथा हस्तिपदे लीनं सर्वप्राणिपदं भवेत् ।
दर्शनानि च सर्वाणि कुल एव तथा प्रिये ॥ १३ ॥
यदा जाम्बूनदानाञ्च सदृशं लौहमस्ति चेत्† [8] ।
तदा च कुलधर्मेण समयोऽन्यः समो भवेत् ॥ १४ ॥

---

* क्वचिन्महाजनसंगृहीततन्त्ररहस्यग्रन्थे कुलार्णवीयवचनमिति कृत्वा यदुद्धृतं कस्मिन्नपि कुलार्णवपुस्तके तदप्राप्तमपि अस्माभिरस्मिन्नुद्धृतम् ।

यथा—

"दक्षिणात् श्रेष्ठसिद्धान्तं सिद्धान्ताद्वाममुत्तमम् ।
वामादुत्तममघोरमघोराद् योगमुत्तमम् ।
योगादप्युत्तमं कौलं कौलात् परतरं न हि"। इति ।

एतन्मते नवाचाराः ।

† ङ पुस्तके "यदा जाम्बूनदानाञ्चे"त्यारभ्य सार्द्धश्लोको नास्ति।

1. क, शिवप्रदं; ङ, परतरं ।
2. क, ग, ङ, कर्णाकर्णगतं । 3. ङ, ज्ञानमन्थेन ।
4. ख, सारभूतः, ग, सारज्ञानं महादेवि; ङ, सर्व्वज्ञेन ।
5. ङ, कुलधर्माणि । 6. क, यतः ।
7. घ, समया धर्माः; ङ, विविधा धर्माः ।
8. ग, यथा जलं नदीनान्तु समुद्रसदृशं भवेत् ।
तथा च कुलधर्मेण समोऽन्यः समयो भवेत् ॥

यथामरतरङ्गिण्या न समाः सकलापगाः ।
तथैव समयाः सर्वे कुलधर्म्मेण नो समाः ॥ १५ ॥
मेरुसर्षपयोर्यद्वत् सूर्य्यखद्योतयोर्यथा ।
तथान्यसमयस्यापि कुलस्य महदन्तरम् ॥ १६ ॥
अस्ति चेत्त्वत्समा नारी मत्समः पुरुषोऽस्ति चेत् ।
कुलेन समधर्मस्तु तथापि न कदाचन[1] ॥ १७ ॥
कुलधर्मं हि नो वेत्ति योऽन्यधर्मेण दुर्मतिः[2] ।
बद्धः संसारपाशेन सोऽन्त्यजानां प्रियो भवेत्[3] ॥ १८ ॥
यो वा कुलाधिकं धर्ममज्ञानाद्वदति[4] प्रिये ।
ब्रह्महत्याधिकं[5] पापं स प्राप्नोति न संशयः ॥ १९ ॥
कुलधर्मप्रवहणं समारुह्य[6] नरोत्तमः ।
सर्गाद् द्वीपान्तविभवं[7] मोक्षरत्नं समश्नुते ॥ २० ॥
दर्शनेषु च सर्वेषु चिरा[8]भ्यासेन मानवाः ।
मोक्षं लभन्ते कौले तु सद्य एव न संशयः ॥ २१ ॥
बहुनात्र[9] किमुक्तेन शृणु मत्प्राणवल्लभे ।
न कौलसमधर्मोऽस्ति त्वां शपे कुलनायिके ॥ २२ ॥
योगी चेन्नैव भोगी स्याद् भोगी चेन्नैव योगवित्[10] ।
भोगयोगात्मकं कौलं तस्मात्[11] सर्वाधिकं[12] प्रिये ॥ २३ ॥

---

1. क, ख, ग, घ, कथयेत्तु तदा प्रिये ।
2. क, ख, ङ, कुलधर्मं हि मोहेन योऽन्यधर्मेण दुर्मतिः; घ, योऽप्यधर्मेण दुर्मतिः ।
3. क, घ, सकृत् संसारिणं ब्रूयात् सोऽन्त्यजो नात्र संशयः; ख, सकृत् साधमनं ब्रूयात्; ङ, स काष्ठाभरणं क्रेयात् ।
4. ङ, भजति ।
5. ख, ब्रह्महत्यासमं; ग, घ, ब्रह्महत्यादिकं ।
6. क, ख, घ, कुलमार्गं प्रवहणं समारुह्य ।
7. ख, घ, ङ, स्वर्गाद्वीपान्तरं गत्वा । 8. ग, विद्या ।
9. क, बहुनेह; ख, बहुलेन । 10. ख, योगवान् ।
11. क, ख, अतः । 12. घ, सर्वात्मकं; ङ, सर्वाधिकः ।

भोगो योगायते साक्षात् पातकं सुकृतायते ।
मोक्षायते च संसारः कुलधर्मे[1] कुलेश्वरि ॥ २४ ॥
ब्रह्मेन्द्राच्युत[2]रुद्रादिदेवतामुनिपुङ्गवाः[3] ।
कुलधर्मपरा देवि मानुषेषु च का कथा ॥ २५ ॥
विहाय सर्वधर्मांश्च नानागुरुमतानि च ।
कुलमेव विजानीयाद् यदीच्छेत् सिद्धि[4]मात्मनः* ॥ २६ ॥
पूर्वजन्मकृताभ्यासात् कुलज्ञानं[5] प्रकाशते ।
स्वप्नोत्थित[6]प्रत्ययवदुपदेशादिकं विना ॥ २७ ॥
जन्मान्तरसहस्रेषु[7] या बुद्धिर्विहिता नृणाम्[8] ।
तामेव लभते जन्तुरुपदेशो निरर्थकः ॥ २८ ॥
शैववैष्णवदौर्गार्किगाणपत्येन्दु[9]सम्भवैः ।
मन्त्रैर्विशुद्धचित्तस्य कुलज्ञानं[10] प्रकाशते ॥ २९ ॥
सर्वधर्माश्च देवेशि पुनरावर्त्तकाः स्मृताः ।
कुलधर्मस्थिता ये च ते सर्वेऽप्यनिवर्त्तकाः[11] ॥ ३० ॥
पुराकृततपोदानयज्ञतीर्थजपव्रतैः ।
क्षीणांहसां[12] नृणां देवि कुलज्ञानं प्रकाशते ॥ ३१ ॥
त्वमहं देवि कल्याणि यस्य तुष्टावुभावपि[13] ।
देवतागुरुभक्त्या च कुलज्ञानं प्रकाशते † ॥ ३२ ॥

---

* क पुस्तके अस्मादारभ्य सार्द्धश्लोको नास्ति ।
† क, ख, घ पुस्तकेषु श्लोकोऽयं नास्ति ।
1. ख, कुलधर्म्मः; ङ, कुलधर्म्मे । 2. ङ, दित्य ।
3. ग, ङ, राक्षसाः । 4. ख, घ, प्रियं ।
5. ङ, कुलधर्म्मः । 6. ख, ग, घ, सुप्तोत्थित ।
7. ङ, जन्मभिर्बहुभिर्देवि । 8. ग, या बुद्धिर्भाविता पुरा ।
9. क, ख, घ, गाणपत्येन्द्र ।
10. क, घ, कौलज्ञानं ।
11. ग, कुलधर्म्मे स्थिता ये न ते सर्वे न तथा भवेत् ।
12. क, ख, ग, क्षीणाघानां ।
13. ङ, कल्याणं यस्य तस्याच्युतावपि ।

शुद्धचित्तस्य शान्तस्य कर्मिणो[1] गुरुसेविनः ।
अतिभक्तस्य गुह्यस्य कुलज्ञानं प्रकाशते * ॥ ३३ ॥
श्रीगुरौ[2] कुलशास्त्रेषु कौलिकेषु कुलाश्रये[3] † ।
यस्य भक्तिर्दृढा तस्य कुलज्ञानं प्रकाशते ॥ ३४ ॥
श्रद्धा[4]विनयहर्षाद्यैः सदाचारदृढव्रतैः ।
गुर्वाज्ञापालकै[5]र्धर्मैः कुलज्ञानमवाप्यते ॥ ३५ ॥
अनर्हे कुलविज्ञानं[6] न तिष्ठति कदाचन ।
तस्मात् परीक्ष्य वक्तव्यं कुलज्ञानं[7] मयोदितम् ॥ ३६ ॥
न ब्रूयात् कुलधर्म तमयोग्ये कुलशासनम्[8] ।
आज्ञाभङ्गञ्च यः कुर्याद्देवताशापमाप्नुयात् ॥ ३७ ॥
आराध्य समयाचारं[9] कुलज्ञानं वदेद् यदि ।
स गुरुश्चापि शिष्यश्च योगिनीनां भवेत् पशुः[10] ॥ ३८ ॥
बोधयित्वा गुरुः शिष्यं कुलज्ञानं प्रकाशयेत् ।
लभेते तावुभौ साक्षाद्[11]योगिनीवीरमेलनम् ॥ ३९ ॥
अनायासेन संसारसागरं यस्तितीर्षति ।
कुलधर्ममिमं ज्ञात्वा मुच्यते नात्र संशयः ॥ ४० ॥
कुलधर्ममहामार्गगन्ता[12] मुक्तिपुरीं व्रजेत् ।
अचिरान्नात्र सन्देहस्तस्मात् कौलं समाश्रयेत्[13] ॥ ४१ ॥

---

* घ पुस्तके श्लोकोऽयं न दृश्यते ।
† क पुस्तके अस्मादारभ्य श्लोकद्वयं नास्ति ।
1. ख, ग, ङ, धर्मिणः । 2. घ, ङ, श्रीगुरोः ।
3. ख, घ, कुलान्वये ; ग, कुलप्रिये ।
4 ग, शुद्धैः ; ङ, शुद्धि । 5. ख, घ, गुर्वाज्ञाकरणैः ।
6. ग, अनर्थाय कुलज्ञानं । 7. ङ, कुलधर्मं ।
8. ग, लब्ध्वा तु कुलधर्मार्थिमयोग्यशिवशासनम् ।
9. ग, अनाराध्य समाचारं ।
10. ङ, प्रभुः । 11. ग, नित्यं ।
12. ख, ग, महामार्गगतः ; ङ, महामार्गे गत्वा ।
13. क, ख, समाचरेत् ।

कुलशास्त्रमनादृत्य[1] पशुशास्त्राणि योऽभ्यसेत् ।
स्वगृहे[2] पायसं त्यक्त्वा भिक्षामटति पार्वति ॥ ४२ ॥
विहाय कुलधर्मं[3] यः परधर्मपरो[4] भवेत् ।
करस्थं रत्नमुत्सृज्य दूरस्थं काचमीहते ॥ ४३ ॥
संत्यज्य कुलमन्त्राणि[5] पशुमन्त्राणि[6] यो जपेत् ।
स धान्यराशिमुत्सृज्य पांसुराशिं जिघृक्षति ॥ ४४ ॥
कुलान्वयं समुत्सृज्य योऽन्यमन्वयमीक्षते ।
तडागादिव तृष्णार्त्तो मृगतृष्णां प्रधावति ॥ ४५ ॥
यथेन्द्रजालजा माया:[7] क्षणमेव सुखावहाः ।
श्रीकौलादन्यसमयास्तादृशाः कुलनायिके ॥ ४६ ॥
कुलधर्ममजानन् यः संसारा[8]न्मोक्षमिच्छति[9] ।
पारावारमपारं स पाणिभ्यां तर्त्तुमिच्छति ॥ ४७ ॥
यो वान्यदर्शनेभ्यश्च भुक्ति मुक्तिञ्च काङ्क्षति ।
स्वप्नलब्धधनेनैव[10] धनवान् स भवेत्तदा[11] ॥ ४८ ॥
शुक्तौ रजतविभ्रान्तिर्यथा जायेत पार्वति ।
तथान्यसमयेभ्यश्च भुक्तिर्मुक्तिः[12] प्रकाशते ॥ ४९ ॥
सर्वकर्म[13]विहीनोऽपि वर्णाश्रमविवर्जितः ।
कुलनिष्ठः कुलेशानि भुक्तिमुक्त्योः स भाजनम् ॥ ५० ॥
कुलज्ञानविहीनोऽपि कुलभक्त्याश्रयो भवेत् ।
सोऽपि सद्गतिमाप्नोति किमुतास्य परायणः[14] ॥ ५१ ॥

---

1. ङ, परित्यज्य । 2. ङ, स मूढः ।
3. ङ, शास्त्र । 4. ङ, सर्वधर्म्मपरः ।
5. ङ, शास्त्राणि । 6. ङ, पशुशास्त्राणि ।
7. ङ, यथेन्द्रजालजा लाभाः । 8. ङ, हि यो मूढः ।
9. ख, संसारे च मुमुक्षति । 10. ङ, स्वप्नलब्धधने लब्धे ।
11. ङ, यदि । 12. ङ, भुक्ति मुक्ति । 13. ख, ङ, धर्म ।
14. ख, किमुतान्ये परे जनाः; घ, किमुतान्ये परायणाः; ङ, किमु तस्य परायणात् ।

कुलधर्मो हतो हन्ति रक्षितो रक्षति प्रिये ।
पूजितः पूजयत्याशु तस्मात्तं न परित्यजेत् ॥ ५२ ॥
निन्दन्तु बान्धवाः सर्वे त्यजन्तु स्त्रीसुतादयः ।
जना हसन्तु मां दृष्ट्वा राजानो दण्डयन्तु वा ॥ ५३ ॥
सेवे सेवे पुनः सेवे त्वामेव परदेवते ।
त्वद्धर्म[1]नैव मुञ्चामि मनोवाक्कायकर्मभिः ॥ ५४ ॥
एवमापद्गतस्यापि यस्य भक्तिः सुनिश्चला ।
स तु सम्पूज्यते देवैरमुत्र स शिवो भवेत् ॥ ५५ ॥
रोगदारिद्र्यदुःखाद्यैः पीडितोऽप्यनिशं शिवे ।
यस्त्वामुपास्ते[2]भक्त्या स नरः सद्गतिमाप्नुयात् ॥ ५६ ॥
जनाः स्तुवन्तु निन्दन्तु लक्ष्मीर्गच्छतु तिष्ठतु ।
मृतिरद्य[3] युगान्ते वा कुलं नैव परित्यजेत्[4] ॥ ५७ ॥
नापि लोभा[5]न्न च क्रोधान्न द्वेषान्न च मत्सरात् ।
न कामान्न भयाद्वापि कुलधर्म[6] परित्यजेत् ॥ ५८ ॥
यो जन्तु[7]नर्चयेत्त्वान्तु कुलधर्मसमाश्रितः ।
क्लिश्यते जातमात्रेण भूतारिणात्मशत्रुणा[8] ॥ ५९ ॥
पुलाका इव धान्येषु पतङ्गा इव जन्तुषु[9] ।
बुद्बुदा इव तोयेषु ये कौलविमुखा हि ते ॥ ६० ॥
तरवोऽपि हि[10] जीवन्ति जीवन्ति मृगपक्षिणः ।
स जीवति मनो यस्य कुलधर्मे व्यवस्थितम् ॥ ६१ ॥
कुलधर्म[11]विहीनस्य दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न[12] जीवति ॥ ६२ ॥

---

1. ङ, त्वत्कर्म । 2. ङ, यस्त्वामुपासते ।
3. ङ, मृत्युरद्य । 4. ङ, न परिवर्जयेत् ।
5. ङ, नार्थलोभात् । 6. ङ, कुल प्राप्तं । 7. ङ, ज्ञात्वा ।
8 ख, भूतावशात्मशत्रुणा ; ङ, अज्ञानमात्रेण भूतावेशी यथा नरः ।
9. क, ख, घ, कुलार्चाविमुखा ये च प्रत्यन्धा इव जन्तुषु ।
10. ख, तरवः किं न जीवन्ति । 11. क, ख, घ, कुलज्ञान ।
12. ङ, श्वसन्निव स ।

गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।
कुलेश्वरि कुलाज्ञस्य[1] तत् पशोरिव जीवितम् ॥ ६३ ॥
विद्वानपि च मूर्खोऽसौ धार्मिको वाप्यधार्मिकः ।
व्रतस्थोऽप्यव्रतस्थो वा यः कौलविमुखो जनः ॥ ६४ ॥
जातास्त एव जगति जन्तवः साधु जीविनः ।
कुलधर्मपरा देवि शेषाश्च द्वारगर्दभाः[2] ॥ ६५ ॥
स पुमानुच्यते सद्भिः कुलधर्मपरायणः ।
अपरस्तु परं सत्यमस्थिकूटत्वचावृतः ॥ ६६ ॥
चतुर्वेदी कुलाज्ञानी श्वपचादधमः प्रिये ।
श्वपचोऽपि कुलज्ञानी ब्राह्मणादतिरिच्यते ॥ ६७ ॥
गुरुकारुण्ययुक्त[3]स्तु दीक्षानिर्धूतपातकः ।
कुलपूजारतो देवि सोऽयं कौलो न चेतरः ॥ ६८ ॥
यः कौलिकः कुलज्ञानं[4] न पश्यति न विन्दति ।
न पूजयति धिक् तस्य तत् काकस्येव[5] जीवितम् ॥ ६९ ॥
ते धन्याः[6] पुण्यकर्म्मणिस्ते सन्तस्ते च योगिनः ।
येषां भाग्यवशाद्देवि कुलज्ञानं प्रकाशते ॥ ७० ॥
ते वन्द्यास्ते महात्मानः कृतार्थास्ते नरोत्तमाः ।
येषामुत्पद्यते चित्ते कुलज्ञानं मयोदितम् ॥ ७१ ॥
सर्वप्रकाशगमनं सर्वतीर्थविगाहनम् ।
यत् सर्वयज्ञाचरणं कुलधर्मप्रवेशनम् ॥ ७२ ॥
प्रविशन्ति कुलं धर्मं ये वै सुकृतिनो नराः[7] ।
ते पुनर्जननीगर्भं न विशन्ति कदाचन ॥ ७३ ॥

---

1. ख, कथाहीनं ।
2. ख, घ, शेषा जठरगर्दभाः; ङ, विशेषा जनवादतः ।
3. क, घ, पूर्णः; ख, सम्पूर्णः ।
4. ङ, कुलज्ञानी ।
5. ङ, वृथा तस्यैव ।
6. क, ख, घ, विज्ञाः ।
7. क, ख, घ, प्रविशन्ति कुलं ये वा धन्यास्ते कृतिनो नराः ।

प्रसङ्गेनापि यः कश्चित् कुलं कुलमितीरयेत् ।
कुलं तत् पावनं[1] देवि भवति त्वदनुग्रहात् ।
कुलज्ञस्य कुलेशानि नान्यधर्मैः प्रयोजनम् ॥ ७४ ॥
कुलेशि कुलनिष्ठानां कौलिकानां महात्मनाम्[2] ।
ददामि[3] परमं ज्ञानं चान्तकाले न संशयः[4] ॥ ७५ ॥
चिरायासाल्पफलदं काङ्क्षन्ते समयं जनाः[5] ।
सुखेन सर्वफलदं कुल कोऽपि[6] त्यजत्यहो ॥ ७६ ॥
कुलज्ञो हि च सर्वज्ञो वेदशास्त्रोज्झितोऽपि वा[7] ।
वेदशास्त्रागमज्ञोऽपि कुलाज्ञस्त्वज्ञ एव हि ॥ ७७ ॥
जानन्ति कुल[8]माहात्म्यं त्वद्भक्ता एव नापरे ।
चकोरा एव जानन्ति नान्ये चन्द्रगतां[9] रुचिम् ॥ ७८ ॥
कुलज्ञा एव तुष्यन्ति श्रुत्वा कुलकथां प्रिये[10] ।
स्वल्पा नद्यो[11] विवर्द्धन्ते ज्योत्स्नया किं समुद्रवत् ॥ ७९ ॥
नान्यधर्ममवेक्षन्ते कौलिकाः सारवेदिनः ।
भृङ्गाः पुष्पान्तरं लुब्धा[12] मन्दारामोदसेविनः ॥ ८० ॥
मानयन्ते हि सारज्ञाः[13] कुलधर्मं न चेतरे ।
शिवः शिरसि धत्तेऽब्जं[14] सैंहिकेयो गिलत्यहो ॥ ८१ ॥
अभिज्ञा एव जानन्ति नाभिज्ञाः कुलदर्शनम् ।
जलमिश्रपयःपानं बकः[15] किं वेत्ति हंसवत् ॥ ८२ ॥
शिवशक्तिमयो लोको लोके कौलं प्रतिष्ठितम्[16] ।
तस्मात् सर्वाधिकं कौलं सर्वसाधारणं कथम् ॥ ८३ ॥

---

1. ङ, तस्य धनं । 2. ङ, कुलात्मनाम् । 3 ङ, ददासि ।
4. ङ, चान्तकालेषु निश्चितम् । 5 ङ, पशुशास्त्र पठन्ति ये ।
6. ङ, कोऽत्र । 7. ख, ङ, वेदशास्त्रार्जितोऽपि वा ।
8. ख, तव । 9. क, घ, ङ, चन्द्ररुचां ।
10. क, ख, घ, इमाम् । 11 ङ, अल्पकूपाः ।
12. ख, घ, लब्धा ; ङ, यद्वत् । 13. क, ख घ, सर्वज्ञा ।
14. ख, घ, धत्तेन्दुं ; ङ, धत्ते त्वां । 15 क, ख, घ, पक्षी ।
16. क, ख, घ, कौले धर्म्मः प्रतिष्ठितः ।

षड्दर्शनानि मेऽङ्गानि[1] पादौ कुक्षिः करौ शिरः।
तेषु भेदन्तु यः कुर्यान्ममाङ्गं छेदयेत्तु सः ॥ ८४ ॥
एतान्येव कुलस्यापि षडङ्गानि भवन्ति हि।
तस्माद्वेदात्मकं शास्त्रं विद्धि कौलात्मकं प्रिये[2] ॥ ८५ ॥
दर्शनेष्वखिलेष्वेव फलदं चैकदैवतम्[3]।
भुक्तिमुक्तिप्रदं नृणां कुलेऽस्मिन् दैवतं प्रिये ॥ ८६ ॥
लोकधर्मविरुद्धञ्च (द्धोऽपि) सिद्धयोगीश्वरि प्रिये[4]।
कुलं प्रमाणतां याति प्रत्यक्षफलदं यतः ॥ ८७ ॥
प्रत्यक्षञ्च प्रमाणाय सर्वेषां प्राणिनां प्रिये।
उपलब्धिबलात्तस्य हताः सर्वे कुतार्किकाः ॥ ८८ ॥
परोक्षं को नु जानीते कस्य किं वा भविष्यति।
यद्वा[5] प्रत्यक्षफलदं तदेवोत्तम[6]दर्शनम् ॥ ८९ ॥
कुलधर्ममिमं ज्ञात्वा मुच्यन्ते सर्वमानवाः।
इति मत्वा महेशानि मया कौलं विगर्हितम् ॥ ९० ॥
त्वत्कारुण्यविहीनानां कुलज्ञानविरोधिनाम्।
पशूनामनभिज्ञानां कुलधर्मो विगर्हितः ॥ ९१ ॥
यस्य जन्मान्तरे पापकर्मबन्धोऽधिको[7] भवेत्।
न तस्य गुरुकारुण्यं कुलज्ञानं न जायते ॥ ९२ ॥
यथान्धा नैव पश्यन्ति सूर्यं सर्वप्रकाशकम्।
तथा कुलं न जानन्ति तव मायाविमोहिताः ॥ ९३ ॥
शैववैष्णवसौरादि[8]दर्शनान्यपि भक्तितः।
भजन्ते[9] मानवा नित्यं वृथायासफलानि च ॥ ९४ ॥

---

1. ख, घ, साङ्गानि।
2. ङ, तस्मान्मदात्मकं कौलमहं कौलात्मकः प्रिये।
3. ख, घ, कुलद्रव्यैकदैवतम्।
4. ङ, सिद्धयोगीश्वरीमते; ख, सिद्धयोगीश्वरो मते।
5. ख, यद्दै। 6. ख, तदेकोत्तम। 7. ङ, कर्मबाधाधिका।
8. क, ध शैववैष्णवबौद्धादि। 9. ङ, जपन्तः।

वेदशास्त्रागमैः प्रोक्तं भोगमोक्षैकसाधनम् ।
मूढा निन्दन्ति हा हन्त मत्प्रियं तव दर्शनम् ॥ ९५ ॥
भ्रामिता हि मया[1] देवि पशवः शास्त्रकोटिषु ।
कुलधर्मं न जानन्ति वृथा ज्ञानाभिमानिनः ॥ ९६ ॥
पशुशास्त्राणि सर्वाणि मयैव कथितानि हि ।
मूर्त्यन्तरन्तु गत्वैव मोहनाय दुरात्मनाम् ॥ ९७ ॥
महापापवशान्नृणां तेषु वाञ्छाभिजायते ।
तेषाञ्च सद्गतिर्नास्ति कल्पकोटिशतैरपि ॥ ९८ ॥
प्रेर्यमाणोऽपि पापात्मा कुले नैव प्रवर्त्तते ।
वार्यमाणोऽपि पुण्यात्मा कुलमेवाभिलम्बते[2] ॥ ९९ ॥
कुलधर्मेण देवत्वं देवाः सम्प्रतिपेदिरे ।
मुनियोगीश्वराद्याश्च सुसिद्धिं परमां[3] गताः ॥ १०० ॥
पशुव्रतादिनिरताः सुलभा दाम्भिका भुवि ।
ये कौलमेव सेवन्ते ते महान्तोऽति[4]दुर्लभाः ॥ १०१ ॥
मानवा बहवः सन्ति मिथ्यातत्त्वार्थवेदिनः[5] ।
दुर्लभोऽयं महेशानि कुलतत्त्व[6]विशारदः ॥ १०२ ॥
यथा रोगातुराः केचिन्मानवाः कुलनायिके ।
दिव्यौषधं न सेवन्ते महाव्याधिविनाशनम् ॥ १०३ ॥
तद्व्याधिवर्द्धनापथ्यं कुर्वन्ति हि कुभेषजम् ।
तथैव जन्ममरणकृतं[7] सांसारिकीं क्रियाम् ॥ १०४ ॥
समाचरन्ति सततं त्वत्कारुण्यविवर्जिताः ।
न भजन्ते कुलं धर्मं भवबन्धविमोचनम् ॥ १०५ ॥
यथा चारण्यजातांस्तु[8] मरीचादीन् वणिग्जनान् ।
मोहतो मानवाः प्रीत्या[9] याचन्ते कुलनायिके ॥ १०६ ॥

---

1. ङ, महा । 2. क, ख, घ, कुल एव प्रवर्त्तते ।
3. क, ख, घ, कुलात् सिद्धिं परां । 4. ङ, पि । 5. ङ, वादिनः ।
6. क, कुलधर्म्म । 7. क, जन्ममरणे कृति ; ङ, जन्ममरणं कृतां ।
8. क, ङ, लवनलशुन । 9. ङ, पदार्थानिव संप्रीत्या ।

अनर्घ्याणि च रत्नानि न याचन्ते हि केचन ।
तथैव पशुशास्त्राणि कर्मपाशफलानि[1] च ॥ १०७ ॥
इति पृच्छन्ति मूर्खास्ते[2] तव मायाविमोहिताः ।
कुलधर्मं न पृच्छन्ति भुक्तिमुक्तिफलप्रदम् ॥ १०८ ॥
कस्तूरीं कर्दमधिया कर्पूरं लवणेच्छया ।
शार्करं शर्कराभ्रान्त्या मणिं काचमनीषया[3] ॥ १०९ ॥
यथादृष्टं न मन्यन्ते करस्थमपि पामराः[4] ।
तथा कौलं न जानन्ति त्वत्प्रसादविवर्जिताः ॥ ११० ॥
अहो मोहस्य माहात्म्यं त्वन्मायाजनितस्य च ।
किमज्ञानपि[5] देवेशि मोहयेदमरानपि ॥ १११ ॥
पेयं मद्यं पलं खाद्यं[6] समालोक्य प्रियामुखम् ।
इत्येवाचरणं जाप्यं परिप्राप्यं[7] परम्पदम् ॥ ११२ ॥
गुरुकारुण्यसंलभ्यमीदृशं कुलदर्शनम् ।
त्वद्भक्ता एव जानन्ति नेतरे भुक्तिमुक्तिदम् ॥ ११३ ॥
गुरूपदेशरहिता महान्त इति[8] केचन ।
मोहयन्ति जनान् सर्वान्[9] स्वयं पूर्वविमोहिताः ॥ ११४ ॥
दुराचारपराः केचिद्वाचयन्ति च पामराः ।
कथं भूतो[10] भवेत् स्वामी सेवकाः स्युस्तथाविधाः ॥ ११५ ॥
बहवः कौलिकं धर्मं मिथ्याज्ञानविडम्बकाः ।
स्वबुद्ध्या[11]कल्पयन्तीत्थं पारम्पर्यविवर्जिताः[12] ॥ ११६ ॥

---

1. क, ङ, कर्मायासफलानि । 2. ख, मूर्खादीन्; ङ, मूर्खा हि ।
3. क, मणिं काचमणि यथा; ख, मणि काचमणिर्यथा; घ, मणिः काचमणिर्यथा ।
4. ङ, यथादृश्यं न मनुते करस्थमपि पामरः ।
5. ङ, किन्तु वक्ष्यामि ।
6. क, खादेत्; ङ, कोऽयं मद्यं वलं खाद्यं
7. क, परात् प्राप्य; ग, प्राप्नोति । 8. ख, महान्धं यान्ति ।
9. क, ख, घ, केचित् । 10. ङ, कथं पूतो ।
11. ङ, सुबुद्ध्या । 12. ग, ङ, पारम्पर्यविमोहिताः ।

मद्यपानेन मनुजो यदि सिद्धिं लभेत वै ।
मद्यपानरताः सर्वे सिद्धिं गच्छन्तु पामराः[1] ॥ ११७ ॥
मांसभक्षणमात्रेण यदि पुण्या गतिर्भवेत् ।
लोके मांसाशिनः सर्वे पुण्यभाजो भवन्ति हि ॥ ११८ ॥
शक्तिसम्भोगमात्रेण[2] यदि मोक्षो भवेत वै ।
सर्वेऽपि जन्तवो लोके मुक्ताः स्युः स्त्रीनिषेवनात् ॥ ११९ ॥
कुलमार्गो महादेवि न मया निन्दितः क्वचित् ।
आचाररहिता येऽत्र निन्दितास्ते न चेतरे[3] ॥ १२० ॥
अन्यथा[4] कौलिके धर्मे आचारः कथितो मया ।
विचरन्त्यन्यथा देवि मूढाः पण्डितमानिनः ॥ १२१ ॥
कृपाणधारागमनात् व्याघ्रकण्ठा[5]वलम्बनात् ।
भुजङ्गधारणान्नूनमशक्यं कुलवर्त्तनम्[6] ॥ १२२ ॥
वृथा पानन्तु देवेशि सुरापानं तदुच्यते ।
तन्महापातकं ज्ञेयं वेदादिषु निरूपितम् ॥ १२३ ॥
अनाघ्रेयमनालोक्य[7]मस्पृश्यञ्चाप्यपेयकम् ।
मद्यं मांसं पशूनान्तु कौलिकानां महाफलम् ॥ १२४ ॥
अमेध्यानि द्विजातीनां मद्यान्येकादशैव तु ।
द्वादशन्तु महामद्यं[8] सर्वेषामुत्तमोत्तमम्[9] ॥ १२५ ॥
सुरा वै मलमन्नानां पाप्मा तु मलमुच्यते[10] ।
तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥ १२६ ॥

---

1. ग, यान्तु समोहितां । 2. ख, ङ, स्त्रीसम्भोगेन देवेशि ।
3. क, ख, घ, च सर्वदा । 4. ग, नान्यथा ।
5. ङ, कर्णा । 6. ङ, कुलसेवनं ।
7. ङ, मनालोच्य । 8. ग, सुधाद्रव्यं ।
9. क, ख, घ, ङ, सर्वेषामधमं स्मृतम् ।
10. क पुस्तके "सुरा चैव मनुष्याणां पेया तु मलमुच्यते" इत्यधिकं पद्यार्द्धं दृश्यते; ख पुस्तके तु "पेया तु" इत्यत्र "पाप्मा तु" इति पाठान्तरं दृश्यते ।

सुरादर्शनमात्रेण कुर्यात् सूर्यविलोकनम् ।
तत्समाघ्राणमात्रेण प्राणायामत्रयं चरेत् ॥ १२७ ॥
आजानुभ्यां भवेन्मग्नो जले चोपवसेदहः[1] ।
ऊर्द्ध्वं नाभेस्त्रिरात्रन्तु मद्यस्य स्पर्शने विधिः ॥ १२८ ॥
सुरापाने कामकृते[2] ज्वलन्तीं तां विनिक्षिपेत् ।
मुखे तया विनिर्दग्धे[3] ततः शुद्धि[4]मवाप्नुयात् ॥ १२९ ॥
मद्यस्पर्शादि[5]दोषस्य प्रायश्चित्तविधिः स्मृतः ।
अविधानेन यो हन्यादात्मार्थं प्राणिनः प्रिये ॥ १३० ॥
निवसेन्नरके घोरे दिनानि पशुरोमभिः ।
स मृतोऽपि[6] दुराचारस्तिर्यग्योनिषु जायते ॥ १३१ ॥
अनुमन्ता विश्वसिता निहन्ता क्रयविक्रयी ।
संस्कर्त्ता चोपहर्त्ता[7] च खादिताऽष्टौ च घातकाः[8] ॥ १३२ ॥
धनैर्विक्रयिको[9] हन्ति खादिता चोपभोगतः ।
घातको वध[10] बन्धाभ्यां इत्येष त्रिविधो वधः ॥ १३३ ॥
मांससन्दर्शनं कृत्वा सुरादर्शनवच्चरेत्[11] ।
तस्मादविधिना मांसं मद्यं न सेवते[12] क्वचित् ॥ १३४ ॥
विधिना सेव्यते देवि तरसा त्वं[13] प्रसीदसि ।
नाशयस्यपरिज्ञानात्[14] सत्यमेव वरानने ॥ १३५ ॥
तृणं वाप्यविधानेन छेदयेन्न कदाचन ।
विधिना गां द्विजं वापि हत्वा पापैर्न लिप्यते[15] ॥ १३६ ॥

---

1. ख, घ, आजानुभ्यां भवेत् स्नानमानाभ्युपवसेदहः ।
2. घ, ङ, ज्ञानकृते । 3. ङ, विनिक्षिप्ते ।
4. क, मुक्ति । 5. ङ, मांसादि ।
6. क, घ, सम्मितानि ; ङ, सम्वितानि, गलितानि ।
7. क, भोक्ता । 8. ते समाः । 9. ङ, धनेन च क्रेता ।
10. ङ, घात । 11. ङ, सूर्य्यदर्शनमाचरेत् ।
12. ङ, च नाचरेत् । 13. क, परमात्वं ; ङ, परमार्थं ।
14. ख, ग, ङ, नाशाय स्वपरज्ञानं ।
15. क, पापात् प्रमुञ्चति ।

बहुनात्र किमुक्तेन सारमेकं[1] शृणु प्रिये ।
जीवन्मुक्तिसुखोपायं कुलशास्त्रेषु गोपितम् ॥ १३७ ॥
यन्मुमुक्षोः फलं देवि कनकस्येव सौरभम्[2] ।
कुलज्ञेऽप्यूद्र्ध्वविख्याते ज्ञानं तत्तदनुत्तमम्[3] ॥ १३८ ॥
कुलशास्त्राणि सर्वाणि मयैवोक्तानि पार्वति ।
प्रमाणानि न सन्देहो न हन्तव्यानि हेतुभिः[4] ॥ १३९ ॥
देवताभ्यः पितृभ्यश्च मधु वाता ऋतायते ।
स्वादिष्ठया मदिष्ठया[5] क्षीरं सर्पिर्मधूदकम् ॥ १४० ॥
हिरण्यपावाः[6] स्वादिश्च अबध्नन् पुरुषं पशुम् ।
दीक्षामुपेयादित्याद्याः[7] प्रमाणं श्रुतयः प्रिये ॥ १४१ ॥
इत्येतत् कथितं किञ्चित् कुलमाहात्म्यमम्बिके ।
समासेन कुलेशानि किं भूयः श्रोतुमिच्छसि ॥ १४२ ॥

इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये सर्वागमो-
त्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे ऊद्र्ध्वाम्नायतन्त्रे
कुलमाहात्म्यकथनं नाम द्वितीय उल्लासः ॥ २ ॥

---

1. ङ, सर्वसारं । 2. ङ, नाफलस्यापि सेवितं ।
3. क, कुलज्ञोऽप्यूद्र्ध्वविख्यातो ज्ञानतत्त्वं तदुच्यते ।
4. क, प्रमाणानि च सन्देहो न हन्तव्योऽन्यहेतुभिः ।
5. ख, ग, स्वाधिष्ठानमधिष्ठानं ; ङ, मधिष्ठायां ।
6. क, मालं ; ङ,पालं । 7. ख, ङ, सद्योदीक्षयतीत्याद्याः ।

# तृतीय उल्लासः।

श्रीदेव्युवाच ।

कुलेश श्रोतुमिच्छामि सर्वधर्मोत्तमोत्तमम् ।
ऊद्ध्वम्नायञ्च तन्मन्त्रं माहात्म्यं[1] वद मे प्रभो ॥ १ ॥

श्रीईश्वर उवाच ।

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण देवता[2] सुप्रसीदति ॥ २ ॥
न कदाचिन्मया प्रोक्तमितः पूर्वं कुलेश्वरि ।
कथयामि तव स्नेहादूद्ध्वम्नायं शृणु प्रिये ॥ ३ ॥
वेदशास्त्रपुराणानि प्रकाश्यानि कुलेश्वरि ।
शैवशाक्तागमाः[3] सर्वे रहस्याः परिकीर्त्तिताः ॥ ४ ॥
रहस्यातिरहस्यानि कुलशास्त्राणि पार्वति ।
रहस्यातिरहस्यानां रहस्यमिदमम्बिके ॥ ५ ॥
ऊद्ध्वम्नायस्य तत्त्वं हि पूर्णब्रह्मात्मकं परम्[4] ।
सुगोपितं मया यत्नादिदानीन्तु प्रकाश्यते ॥ ६ ॥
मम पञ्चमुखेभ्यश्च पञ्चाम्नायाः समुद्गताः ।
पूर्वश्च पश्चिमश्चैव दक्षिणश्चोत्तरस्तथा ।
ऊद्ध्वम्नायश्च पञ्चैते मोक्षमार्गाः प्रकीर्त्तिताः ॥ ७ ॥
आम्नाया बहवः सन्ति नोद्ध्वम्नायेन ते समाः ।
सत्यमेतद्वरारोहे नात्र कार्या विचारणा ॥ ८ ॥

---

1. ङ, ऊद्ध्वम्नायस्य माहात्म्यं तन्मन्त्रं । 2. ख, शङ्करी ।
3. ख, ग, घ, शैवशास्त्रागमाः ; ङ, शैवाचारागमाः ।
4. ङ, ऊद्ध्वम्नायञ्च तं वेद्मि पूजाहन्तात्मकं परम् । ऊद्ध्वम्नायार्थतत्त्वं हि ।

आम्नाया बहवो गुप्तांश्चतु[1]राम्नायभेदजाः ।
अस्मिंस्तन्त्रे[2] समाख्याताः पूर्वं ते[3] कुलनायिके ॥ ९ ॥
चतुराम्नाय[4]वेत्तारो बहवः सन्ति कामिनि[5] ।
ऊद्ध्वर्म्नायस्य[6] तत्त्वज्ञा विरला[7] वीरवन्दिते ॥ १० ॥
यावन्तः पांसवो भूमेस्तावन्तः समुदीरिताः ।
एकैकाम्नायजा मन्त्रा भुक्तिमुक्तिफलप्रदाः ॥ ११ ॥
उपमन्त्राश्च तावन्तः सारदाः समुदीरिताः ।
मयैव कथितास्ते तु लोकानुग्रहकाङ्क्षया ॥ १२ ॥
सर्वेषामपि मन्त्राणां देवतास्तत्फलप्रदाः ।
आवयोरंशसम्भूताः समुद्दिष्टाः शुचिस्मिते ॥ १३ ॥
सर्वमन्त्रानहं वेद्मि नान्यो जानाति कश्चन ।
मत्प्रसादेन यः कश्चिद्वेत्ति मानवकोटिषु ॥ १४ ॥
एकाम्नायञ्च यो वेत्ति स मुक्तो नात्र संशयः ।
किं पुनश्चतुराम्नायवेत्ता साक्षाच्छिवो भवेत् ॥ १५ ॥
चतुराम्नायविज्ञानादूद्ध्वर्म्नायः परः प्रिये[8] ।
तस्मात्तदेव जानीयाद् यदीच्छेत् सिद्धिमात्मनः ॥ १६ ॥
ऊद्ध्वर्त्वात् सर्वधर्माणामूद्ध्वर्म्नायः प्रशंस्यते[9] ।
ऊद्ध्वं नयत्यधःस्थञ्च[10] ऊद्ध्वर्म्नाय इतीरितः ॥ १७ ॥
ऊद्ध्वर्तत्वात्[11] कुलेशानि ध्वस्तसंसारसागरात् ।
ऊद्ध्वर्लोकैकसेव्यत्वा[12]दूद्ध्वर्म्नाय इति स्मृतः ॥ १८ ॥

---

1. क, घ, श्चोत्तरा ।
2. क, यस्मिन् मन्त्रे ; ग, घ, अस्मिन् मन्त्रे ।
3. ग, घ, सर्वत्र ; ङ, पूर्वत्र ।
4. ङ, उत्तराम्नाय ।
5. ख, पार्वति ; ग, घ, मानिनि ; ङ, मानिनः ।
6. ङ, ऊद्ध्वर्म्नायात्म ।
7. क, ख, वीराणां ।
8. ख, ग, घ, इतीरितः ।
9. क, ग, ङ, प्रशस्यते ।
10. ङ, ञ्चेत् ।
11. ख, ऊद्ध्वर्त्वाच्च ।
12. ङ, लोकनिषेव्यत्वा ।

तस्माद्देवेशि जानीहि साक्षा[1]न्मोक्षैकसाधनम् ।
सर्वाम्नायाधिकफल[2]मूद्र्ध्वाम्नायं परात् परम् ॥ १९ ॥
सर्वलोकेषु सर्वेभ्यो ह्यहं पूज्यो यथा प्रिये ।
आम्नायेषु च सर्वेषु ऊद्र्ध्वाम्नायस्तथा शिवे ॥ २० ॥
देवतानां यथा विष्णुर्ज्योतिषां भास्करो यथा ।
तीर्थानान्तु यथा काशी स्वर्नदी सरितां यथा ॥ २१ ॥
पर्वतानां यथा मेरुस्तरूणां चन्दनं यथा ।
अश्वमेधः क्रतूनाञ्च पाषाणानां यथा मणिः ॥ २२ ॥
यथा रसानां माधुर्य धातूनां काञ्चनं यथा ।
चतुष्पदां यथा धेनुर्यथा हंसस्तु पक्षिणाम् ॥ २३ ॥
आश्रमाणां यथा भिक्षुर्वर्णानां ब्राह्मणो यथा ।
मनुष्याणां यथा राजाऽवयवानां यथा शिरः[3] ॥ २४ ॥
आमोदानाञ्च कस्तूरी यथा काञ्चीपुरी पुराम् ।
तथैव सर्वधर्माणामूद्र्ध्वाम्नायोऽधिकः प्रिये ॥ २५ ॥
नानाजन्मार्जितापारपुण्यकर्मफलोदयात् ।
ऊद्र्ध्वाम्नायं विजानीयान्नान्यथा वीरवन्दिते ॥ २६ ॥
धन्यो मनुष्यलक्षेषु जानाति कुलदर्शनम्[4] ।
तेषां लक्षेषु यः कश्चिदूद्र्ध्वाम्नायं प्रवेत्ति च ॥ २७ ॥
न वेदैर्नागमैः शास्त्रैर्न पुराणैः सुविस्तरैः ।
न यज्ञैर्न तपोभिर्वा न तीर्थव्रतकोटिभिः ॥ २८ ॥
नान्यै[5]रुपायैर्देवेशि मन्त्रौषधिपुरःसरैः ।
आम्नायो ज्ञायते चोद्र्ध्वः[6] श्रीमद्गुरुमुखं विना * ॥ २९ ॥

---

* ङ पुस्तके इतः परं "विधातव्यस्त्वया देव्या सततञ्च पुनः स्वयं" इति श्लोकार्द्धमधिकं ।

1. ख, ग, नान्य ।
2. ख, सर्वाम्नायाधिपुकं पुण्यं ।
3. क, अमराणां यथा शिवः ।
4. ङ, कुलसाधनम् ।
5. ङ, अन्यै ।
6. ख, शीघ्रं ।

तमेवान्वेषयेत्तत्र सर्वज्ञं करुणानिधिम् ।
सर्वलक्षणसम्पन्नं ऊद्र्ध्वाम्नायार्थकोविदम् ।
तस्माद्देवेशि जानीयादूद्र्ध्वाम्नायं कुलेश्वरि ॥ ३० ॥
आम्नायं यो नरो देवि विजानाति च तत्त्वतः ।
लभते काङ्क्षितां सिद्धिं सत्यं सत्यं वरानने ॥ ३१ ॥
ऊद्र्ध्वाम्नायं विजानाति यः सम्यक्[1] श्रीगुरोर्मुखात् ।
शास्त्रमार्गेण स[2] नरो जीवन्मुक्तो न संशयः ॥ ३२ ॥
आम्नायमीदृशं[3] देवि विजानाति च तत्त्वतः * ।
स वन्द्यः सद्गुरुः सोऽर्च्यः[4] स दैवज्ञः स मान्त्रिकः ।
स सेव्यः स च संस्तुत्यः[5] स द्रष्टव्यः स सात्त्विकः[6] ॥ ३३ ॥
स व्रती स तपस्वी च सोऽनुष्ठाता स पूजकः ।
स वेदागमशास्त्रादिसर्वविद्याविशारदः ॥ ३४ ॥
स आचार्यः स मतिमान् स यतिः स च कौलिकः ।
स यज्वा स च पूतात्मा स जापी स च साधकः ॥ ३५ ॥
स योगी स कृतार्थस्तु[7] स वीरः स च उत्तमः[8] ।
स पुण्यात्मा स सर्वज्ञः[9] स मुक्तः स शिवः प्रिये ॥ ३६ ॥
तत्कुलं पावनं देवि धन्या तज्जननी स्मृता[10] ।
तत्पिता च कृतार्थः स्यान्मुक्तास्तत्पितरः प्रिये ।
पुण्यास्तद्वंशजाः सर्वे पूता[11]स्तन्मित्रबान्धवाः ॥ ३७ ॥
बहुनेह किमुक्तेन चोद्र्ध्वाम्नायपरस्य च ।
स्मरणं कीर्त्तनं वापि दर्शनं वन्दनं[12] तथा ।
सम्भाषण[13]ञ्च कुरुते राजसूयाधिकं फलम् ॥ ३८ ॥

---

* क, ख, ग पुस्तकेषु अस्मादारभ्य सार्द्धश्लोको न दृश्यते ।
1. ङ, कश्चित् । 2. ङ, शास्त्रमार्गेणैव ।
3. ङ, आम्नायं यो नरो । 4. घ, सगुरुः सोऽपि ।
5. घ, सम्भाष्यः । 6. घ, ममाधिकः । 7. ङ, सङ्गतार्थ ।
8. ङ, सत्तमः । 9. ख, धर्मज्ञः । 10. ख, ग, परा ।
11. घ, पुण्या । 12. ङ, स्पर्शनं । 13. ख, सम्भावनं ।

स यत्र वसते देवि तत्र श्रीर्विजयो[1] भवेत् ।
अनामयं सुभिक्षञ्च सुवृष्टिर्निरुपद्रवम् ॥ ३९ ॥
तस्माद् गुरुप्रसादेन ऊद्ध्वम्नायं नरोत्तमः ।
यो वेत्ति तत्त्वतो देवि स मे प्रियतमो भवेत् ॥ ४० ॥
पूर्वाम्नायः सृष्टिरूपः[2] स्थितिरूपश्च[3] दक्षिणः ।
संहारः पश्चिमो देवि उत्तरोऽनुग्रहो भवेत् ॥ ४१ ॥
मन्त्रयोगं विदुः पूर्वं भक्तियोगञ्च दक्षिणम् ।
पश्चिमं कर्मयोगञ्च ज्ञानयोगं तथोत्तरम् ॥ ४२ ॥
पूर्वाम्नायस्य सङ्केताश्चतुर्विंशतिरीरिताः ।
दक्षिणाम्नायसङ्केताः पञ्चविंशतिरीरिताः ॥ ४३ ॥
पश्चिमाम्नायसङ्केता द्वात्रिंशत्[4] समुदाहृताः ।
विदुः षट्त्रिंशदाम्नाये[5] सङ्केताः श्रीमदुत्तरे[6] ॥ ४४ ॥
ऊद्ध्वम्नायस्य चैतानि न सन्ति[7] कुलनायिके ।
साक्षाच्छिवस्वरूपत्वा[8]न्न किञ्चित् कर्म विद्यते ॥ ४५ ॥
ऊद्ध्वम्नायस्य माहात्म्यमहं वेद्मि न चापरः ।
मत्स्नेहात्त्वञ्च जानासि सत्यमेतद्वरानने ॥ ४६ ॥
ऊद्ध्वम्नायस्य माहात्म्यमिति ते कथितं मया[9] ।
समासेन कुलेशानि मन्त्रमाहात्म्यमुच्यते[10] ॥ ४७ ॥
इतः पूर्वं[11] मया नोक्तं यस्य कस्यापि पार्वति ।
तद्वदामि तव स्नेहाच्छृणु मत्प्राणवल्लभे ॥ ४८ ॥
श्रीप्रासादपरामन्त्रमूद्ध्वम्नायमधिष्ठितम्[12] ।
आवयोः परमाकारं यो वेत्ति स स्वयं शिवः ॥ ४९ ॥

---

1. ख, विजयी । 2. ख, स्थितिरूपः । 3. ख, सृष्टिरूपः ।
4. ङ, द्वाविंशत् । 5. ख, षड्विंशदाम्नाये ।
6. ङ, उत्तराम्नायसङ्केतः षट्त्रिंशत् समुदाहृतः ।
7. ङ, वसन्ति । 8. ङ, ज्ञानस्वरूपत्वात् ।
9. ख, प्रिये । 10. ङ, मुत्तमं ।
11. क, ग, इतः परं । 12. ख, मभीप्सितं ।

शिवादिक्रिमि[1]पर्यन्तं प्राणिनां प्राणवर्त्मना ।
निश्वासोच्छ्वासरूपेण मन्त्रोऽयं वर्त्तते प्रिये ॥ ५० ॥
अनिलेन विना मेघो यथाकाशे न वेष्टते[2] ।
पराप्रासादमन्त्रेण विना लोकस्तथा प्रिये ॥ ५१ ॥
पराप्रासादमन्त्रेण स्यूत[3]मेतच्चराचरम् ।
अभिन्नं तत्त्वतो देवि तालवृन्ते यथानिलः ॥ ५२ ॥
बीजेऽङ्कुरस्तिले तैलमग्नावुष्णं रवौ प्रभा ।
चन्द्रे ज्योत्स्नाऽनलः काष्ठे पुष्पे गन्धो जले द्रवः ॥ ५३ ॥
शब्दे चार्थः शिवे शक्तिः क्षीरे सर्पिः फले रुचिः ।
शर्करायाञ्च माधुर्यं घनसारे च शीतलम् ॥ ५४ ॥
निग्रहानुग्रहो मन्त्रे प्रतिमायाञ्च देवता ।
दर्पणे प्रतिबिम्बञ्च समीरे चलनं यथा ।
पराप्रासादमन्त्रेऽपि प्रपञ्चोऽयं[4] तथा स्थितः ॥ ५५ ॥
वटबीजे यथा वृक्षः सूक्ष्मरूपेण तिष्ठति ।
पराप्रासादमन्त्रेऽस्मिन् ब्रह्माण्डोऽपि तथा स्थितः ॥ ५६ ॥
सुपक्वेषु पदार्थेषु[5] सुरसेषु कुलेश्वरि ।
लवणेन विना स्वादु यथा भोक्तुर्न जायते ॥ ५७ ॥
पराप्रासादमन्त्रेण ये वा मन्त्रा न सङ्गताः ।
ते फलं न प्रयच्छन्ति मन्त्रशक्तिविवर्जिताः ॥ ५८ ॥
श्रीप्रासादपरामन्त्रो गोपनीयः प्रयत्नतः ॥ ५९ ॥
विचार्याहं पुराणार्थान्[6] दर्शनाम्नायभेदजान् ।
समग्रान् वेद्म्यहं मन्त्रान् शास्त्राणि विविधानि च * ॥ ६० ॥
सहस्राक्षादयो देवाः शास्त्रेषु[7] विविधेषु च ।
भ्रमन्ति तेषु मूढास्ते तव मायाविमोहिताः ॥ ६१ ॥

---

* क, ख, ग, घ पुस्तकेषु श्लोकार्द्धमिदं न दृश्यते ।

1. ग, घ, द्रुमपर्य्यन्तं । 2. ख, ग, घ, वेष्टितः । 3. क, ङ, सूतमेत ।
4. ख, पराप्रासादमन्त्रोऽपि प्रपञ्चोऽपि । 5. ङ, यथान्नेषु ।
6. ङ, पुराणानि । 7. क, ख, ग, घ, सहस्रसंख्यान्यप्यन्यशास्त्राणि ।

जायन्ते च म्रियन्ते च संसारक्लेशभागिनः
श्रीप्रासादपरामन्त्रं न गायन्तः कुलेश्वरि * ।
न लभन्ते हि मोक्षं ते तव मायाविमोहिताः[1] ॥ ६२ ॥
मद्रूपे श्रीगुरौ यस्य दृढा भक्तिः प्रजायते ।
श्रीप्रासादपरामन्त्रं स ज्ञात्वा परिमुच्यते ॥ ६३ ॥
पूर्वजन्मसहस्रेषु शैवादिसमयोद्यतान् ।
चतुराम्नायजान् मन्त्रान् गुर्वाज्ञां यो भजिष्यति[2] ॥ ६४ ॥
स पापकञ्चुकान्मुक्तः शुद्धात्मा गुरुवत्सलः ।
श्रीप्रासादपरामन्त्रं विजानाति न चान्यथा[3] ॥ ६५ ॥
सब्रह्मविष्णुरुद्राश्च शक्रादिसुरपुङ्गवाः ।
वसुरुद्रार्कदिक्पाला मनुचन्द्रादयः प्रिये ॥ ६६ ॥
मार्कण्डेयादिमुनयो वसिष्ठादिमुनीश्वराः ।
सनकाद्याश्च योगीशा जीवन्मुक्ताः शुकादयः ॥ ६७ ॥
यक्षकिन्नरगन्धर्वाः सिद्धविद्याधरादयः ।
श्रीप्रासादपरामन्त्रप्रभवञ्चामितं फलम्[4] ।
प्राप्य मन्त्रमिमं पुण्यं जपन्त्यद्यापि पार्वति ॥ ६८ ॥
सामर्थ्य पूज्यता[5] विद्या तेजः सौख्यमरोगिता ।
राज्यं स्वर्गश्च मोक्षश्च पराप्रासादजापिनः ॥ ६९ ॥
ब्रह्मेन्द्ररुद्रविष्णूनामपि दूरायते[6] पदम् ।
सर्वकर्म[7]विहीनोऽपि पराप्रासादमन्त्रवित् ।
सुखेन यां गतिं याति न तां सर्वेऽपि धार्मिकाः ॥ ७० ॥
तस्य चिन्तामणिः कामधेनुः कल्पतरुर्गृहे ।
कुबेरः किङ्करः[8] साक्षात् पराप्रासादजापिनः ॥ ७१ ॥

---

* क, ख, ग, घ पुस्तकेषु पद्यार्द्धमिदं न दृश्यते ।
1. ङ, त्वत्प्रसादविवर्जिताः । 2. ख, सर्वज्ञो यो भविष्यति ।
3. ख, यो विजानाति नान्यथा । 4. क, घ, जापाल्लेभिरे कामिकं ।
5. क, घ, पुष्टता ; ग, पुष्टदा ; ङ, पूजिता ।
6. ङ, रुद्रेन्दुब्रह्मविष्णूनामभिभूयायते ।
7. क, धर्मकर्म । 8. ख, ग, घ, शङ्करः ।

यथा दिव्यमणि[1]स्पर्शाल्लोहो भवति काञ्चनम् ।
पराप्रासादजापाच्च[2] पशुः पशुपतिर्भवेत् ॥ ७२ ॥
श्रीप्रासादपरामन्त्रं यो विजानाति तत्त्वतः[3] ।
स मां त्वाञ्च विजानाति चावयोरप्यतिप्रियः ॥ ७३ ॥
पराप्रासादमन्त्रज्ञः श्वपचोऽपि हि पार्वति ।
देवतास्थापने शक्तः प्रतिमादौ न संशयः ॥ ७४ ॥
मन्त्रमात्रन्तु[4] यो वेत्ति पराप्रासादसंज्ञकम् ।
श्वपचोऽपि हि मुच्येत किं पुनस्तद्विधानवित् ॥ ७५ ॥
पराप्रासादमन्त्रज्ञो यत् करोति यदिच्छति ।
यद् ब्रूते तन्महेशानि तपो ध्यानं जपो भवेत् ॥ ७६ ॥
दीक्षापूर्वं महेशानि पारम्पर्यसमन्वितम् ।
पराप्रासादमन्त्रं यो वेत्ति सोऽहं न संशयः ॥ ७७ ॥
चराचरसमेतानि भुवनानि चतुर्दश ।
पराप्रासादमन्त्रज्ञदेहे तिष्ठन्ति नित्यशः[5] * ॥ ७८ ॥
पराप्रासादमन्त्रज्ञो यत्र तिष्ठति भामिनि ।
दिव्यक्षेत्रं समुद्दिष्टं समन्ताद्दशयोजनम् ॥ ७९ ॥
पराप्रासादमन्त्रार्थतत्त्वज्ञं कुलनायिके ।
सुरासुराश्च वन्दन्ते[6] किं पुनर्मानवादयः ॥ ८० ॥
पराप्रासादमन्त्रज्ञो यत्र तिष्ठति पार्वति[7] ।
सिद्धक्षेत्रं मदीयं वा मुनिदेवगणैः सह † ॥ ८१ ॥
शैव[8]वैष्णवदौर्गार्किगाणपत्येन्दुसम्भवान् ।
सर्वमन्त्रान् स जानाति पराप्रासादमन्त्रवित् ॥ ८२ ॥

---

* अस्मात् परं सार्द्धश्लोकद्वयं ख पुस्तके न दृश्यते ।
† इत आरभ्य सार्द्धश्लोकः क पुस्तके न दृश्यते ।

1. ङ, रस ।
2. ङ, पराप्रासादजापी यः ।
3. ङ, भावतः ।
4. ख, मन्त्रमन्त्रन्तु ।
5. ख, सर्वदा ।
6. ङ, वदन्ति ।
7. क, ग, घ पराप्रासादमन्त्रज्ञमनुतिष्ठति मन्त्रवित् ।
8. ङ, सौर ।

श्रीप्रासादपरामन्त्रो जिह्वाग्रे यस्य वर्त्तते ।
तस्य दर्शनमात्रेण श्वपचोऽपि विमुच्यते ॥ ८३ ॥
ब्राह्मणो वाऽन्त्यजो वापि शुचिर्वाप्यशुचिः प्रिये[1] ।
पराप्रासादजापी यः स मुक्तो नात्र संशयः ॥ ८४ ॥
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।
पराप्रासादमन्त्रोऽयं देवेशि न च निष्फलः ॥ ८५ ॥
चिरेणैकैकफलदा मन्त्राः सन्ति सहस्रशः ।
कुलेशि मन्त्रराजोऽयं शीघ्रं सर्वफलप्रदः ॥ ८६ ॥
पराप्रासादमन्त्रोऽयं सर्वमन्त्रोत्तमोत्तमः ।
ज्ञानतोऽज्ञानतो वापि[2] भजतां कामदो मनुः[3] ॥ ८७ ॥
शचीन्द्रौ रोहिणीचन्द्रौ स्वाहाग्नी च प्रभारवी ।
लक्ष्मीनारायणौ वाणीधातारौ रात्रिवासरौ ॥ ८८ ॥
अग्नीषोमौ बिन्दुनादौ देवि प्रकृतिपूरुषौ ।
आधाराधेयनामानौ भोगमोक्षौ कुलेश्वरि ॥ ८९ ॥
प्राणापानौ च वागर्थौ प्रिये[4] विधिनिषेधकौ ।
सुखदुःखादि यद् द्वन्द्वं दृश्यते श्रूयते मया[5] ।
सर्वलोकेषु तत् सर्वमावामेव न संशयः ॥ ९० ॥
पुंस्त्रीरूपाणि सर्वाणि चावयोरंशकानि[6] हि ।
पराप्रासादमन्त्रोऽयं तस्मात् सर्वात्मको भवेत्[7] ॥ ९१ ॥
अरूपं भावनागम्यं परं ब्रह्म कुलेश्वरि ।
निष्कलं[8] निर्मलं नित्यं निर्गुणं व्योमसन्निभम्[9] ॥ ९२ ॥
अनन्तमव्ययं[10] तत्त्वं मनोवाचामगोचरम् ।
पराप्रासादमन्त्रार्थसन्धानात् सम्प्रकाशते ॥ ९३ ॥

---

1. ख, शिवे ; ङ, शुचिर्वाप्यथवाऽशुचिः ।
2. ख, जानतोऽजानतो वापि ।
3. क, ग, मणिः । 4. ङ, शब्दार्थौ प्रियौ । 5. ङ, यथा ।
6. ङ, रंशजानि । 7. ख, जपेत् । 8. ङ, निष्फलं ।
9. क, निर्गुणञ्च समन्वितम् । 10. ङ, अनन्तममलं ।

तस्मान्मन्त्रमिदं देवि पराप्रासादसंज्ञकम् ।
परतत्त्वस्वरूपत्वात् सच्चिदानन्दलक्षणात् ॥ ९४ ॥
शिवशक्तिमयत्वाच्च भुक्तिमुक्तिप्रदानतः ।
सकर्मापि च निष्कर्म सगुणञ्चापि निर्गुणम् ॥ ९५ ॥
श्रीप्रासादपरामन्त्रं सर्वमन्त्रशिरोमणि ।
जपन् भुक्तिञ्च मुक्तिञ्च लभते नात्र संशयः ॥ ९६ ॥
बहुनात्र किमुक्तेन सर्वसारं शृणु प्रिये ।
श्रीप्रासादपरामन्त्रसमं मन्त्रं न विद्यते ॥ ९७ ॥
इदमेव परं ज्ञानमिदमेव परं तपः ।
इदमेव परं ध्यानमिदमेव परार्चनम् ॥ ९८ ॥
इदमेव परा दीक्षा इदमेव परो जपः ।
इदमेव परं तत्त्वमिदमेव परं व्रतम् ॥ ९९ ॥
इदमेव परो यज्ञ इदमेव परात् परम् ।
इदमेव परं श्रेय इदमेव परं फलम् ॥ १०० ॥
इदमेव परं ब्रह्म इदमेव परा गतिः ।
इदमेव परं गुह्यं सत्यं सत्यं न संशयः ।
इति मत्वा मनुवरं तन्निष्ठः[1] स्यात् सदा प्रिये ॥ १०१ ॥
आगमोक्तेन विधिना क्रम[2]पूजापुरःसरम् ।
श्रीप्रासादपरामन्त्रं शतमष्टोत्तरं जपेत् ।
मुच्यते ब्रह्महत्यादिमहापापैश्च पञ्चभिः ॥ १०२ ॥
द्विशतं यो जपेद्देवि श्रीप्रासादपरामनुम् ।
चतुरशीति[3]लक्षांशधारणा[4]चरितैरपि ॥ १०३ ॥
स्वयोनि[5]जाङ्गचरितैरसंख्यजननार्जितैः ।
वार्द्धके यौवने बाल्ये जाग्रत्स्वप्नसुषुप्तिषु ॥ १०४ ॥

---

1. ङ, यन्निष्ठः । 2. ख, देवि ।
3. ङ, चतुर्विंशति । 4. ख, लक्षांशच धारयन् ।
5. ङ, अयोनि ।

कर्मणा मनसा वाचा ज्ञानाज्ञानकृतैरपि ।
महापातकसङ्घैश्च ह्युपपातककोटिभिः ।
मुच्यते नात्र सन्देहः सत्यमेतद्वरानने ॥ १०५ ॥
त्रिशतं यो जपेद्देवि श्रीप्रासादपरामनुम् ।
सर्वक्रतुषु यत् पुण्यं सर्वदानेषु यत् फलम् ॥ १०६ ॥
सर्वव्रतेषु यत् पुण्यं सर्वतीर्थेषु यत् फलम् * ।
तत् फलं लभते देवि नात्र कार्या विचारणा ॥ १०७ ॥
चतुःशतं जपेद् यस्तु श्रीप्रासादपरामनुम् ।
सदा तस्य गृहद्वारे ह्यणिमाद्यष्टसिद्धयः ।
सेवन्ते[1] नात्र सन्देहः सर्वसिद्धिसमन्विताः ॥ १०८ ॥
यद् यन्मनोऽभिलषितं तत्तत् प्राप्नोत्यसंशयः[2] ।
धर्मार्थकाममोक्षाश्च साक्षात्तस्य करे स्थिताः ॥ १०९ ॥
सालोक्यप्रमुखां देवि लभेन्मुक्तिं चतुर्विधाम् ।
सत्यमेतन्न सन्देहः साधकः कुलनायिके ॥ ११० ॥
जपेत् पञ्चशतं यस्तु श्रीप्रासादपरामनुम् ।
तत्फलं नैव शक्नोमि कथितुं कुलनायिके ॥ १११ ॥
तस्मात् सर्वप्रयत्नेन सर्वावस्थासु सर्वदा ।
श्रीप्रासादपरामन्त्रं जपेद् भुक्तिविमुक्तये[3] ॥ ११२ ॥
नास्ति गुर्वधिकं तत्त्वं न शिवाधिकदैवतम् ।
न हि वेदाधिका विद्या न कौलसमदर्शनम् ॥ ११३ ॥
न कुलादधिकं ज्ञानं[4] न ज्ञानादधिकं सुखम् ।
नाष्टाङ्गादधिका[5] पूजा न हि मोक्षाधिकं फलम् ।
इदं सत्यमिदं सत्यं सत्यं सत्यं न संशयः ॥ ११४ ॥
श्रीप्रासादपरामन्त्रमाहात्म्यमिह वर्णितुम्[6] ।
न शक्नोमि वरारोहे कल्पकोटिशतैरपि ॥ ११५ ॥

---

* श्लोकार्द्धमिदं क, ग पुस्तकयोर्न दृश्यते ।
1. ङ, वसन्ते । 2. ङ, ति नित्यशः ।
3. क, ग, घ, जपेच्च भुवि मुक्तये ; 4. ङ, न कुलज्ञाधिको ज्ञानी ।
5. ख, ग, घ, नाष्टाष्टकाधिका ; ङ, नाष्टाङ्ग चाधिका ।
6. ख, मिदमद्भुतं ।

गिरौ सर्षपमात्रन्तु सागरे वालुका यथा[1] ।
तथा च मन्त्रमाहात्म्यं किञ्चित्ते कथितं मया ॥ ११६ ॥
ऊर्द्ध्वाम्नायस्य माहात्म्यं श्रीप्रासादपरामनोः ।
इति ते कथितं देवि किं भूयः श्रोतुमिच्छसि ॥ ११७ ॥

इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये
सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चम-
खण्डे ऊर्द्ध्वाम्नायतन्त्रे श्रीप्रासादपरा-
मन्त्रकथनं नाम तृतीय उल्लासः ॥

---

1. ङ, वालुकानि च ।

# चतुर्थ उल्लासः ।



श्रीदेव्युवाच ।

कुलेश श्रोतुमिच्छामि श्रीप्रासादपरामनुम्[1] ।
मन्त्रराजं वदेशान न्यासध्यानादिभिः सह ॥ १ ॥

श्रीईश्वर उवाच ॥

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण[2] शिवाकारः प्रजायते ॥ २ ॥
इतः पूर्वं मया नोक्तो मन्त्रोऽयं यस्य कस्यचित् ।
तव स्नेहाद्ददाम्यद्य शृणु मत्[3]प्राणवल्लभे ॥ ३ ॥
अनन्तचन्द्रभुवनमिन्दुबिन्दुयुगान्वितः ।
श्रीप्रासादपरामन्त्रो भुक्तिमुक्तिफलप्रदः ॥ ४ ॥
पराप्रासादमन्त्रस्तु सादिरुक्तः कुलेश्वरि ।
प्रकाशानन्दरूपत्वात् प्रत्यक्षफलदानतः ॥ ५ ॥
प्रसन्नचित्तवश्यत्वात्[4] प्रसिद्धार्थनिरूपणात् ।
प्राक्तनाघ[5]प्रशमनात् प्रपन्नार्त्तिविनाशनात्[6] ।
प्रसादकरणाच्छीघ्रं प्रासादमनुरीरितः ॥ ६ ॥
परतत्त्वस्वरूपत्वात् परमात्म[7]प्रकाशनात् ।
परमानन्द[8]जननात् परधर्मनिदर्शनात्[9] ॥ ७ ॥
परोक्षफलदानाच्च परमैश्वर्यकारणात् ।
परत्वात् सर्वमन्त्राणां परामन्त्र इतीरितः ॥ ८ ॥

---

1. ख, परात्मकम् । 2. ख, स्मरणमात्रेण; घ, दर्शनमात्रेण ।
3. ख, ग, घ, तत् । 4. ख, घ, रस्यत्वात् । 5. क, प्राक्तनस्य ।
6. ग, घ, निवारणात् । 7. ख, परमार्थ ।
8. घ, परत्रानन्द । 9 ङ, परमैश्वर्य्यकारणात् ।

कुलमन्त्रमिदं देवि न्यासं शृणु वदामि ते[1] ।
आदौ[2] प्रातः समुत्थाय गुरुदेवानु[3]चिन्तनम् ॥ ९ ॥
कन्दमूले मनः कृत्वा[4] कुर्याद्धिण्मूलमोचनम् ।
शौचास्यशोधनं स्नानं सन्ध्यातर्पणमाचरेत् ॥ १० ॥
एकान्ते द्वारयजनं विघ्नत्रयनिवारणम्[5] ।
पूजास्थानप्रवेशश्च तथासनोप[6]वेशनम् ॥ ११ ॥
देवीपूजागृह[7]ध्यानं शिवादिगुरुवन्दनम् ।
आसनं गणपक्षेत्रपालवन्दनमीश्वरि ॥ १२ ॥
पादुकास्मरणञ्चैव दिननाथा[8]र्चनं प्रिये ।
कराङ्गशोधनं प्राणायामः स्वब्रह्मरन्ध्रके ॥ १३ ॥
दिग्बन्धनञ्चाङ्गयुग्म[9] विधियुक्ता[10]ञ्च मातृकाम् ।
दशप्रकारभूताख्यां लिपिं कमठसंज्ञकाम् ॥ १४ ॥
ऋषिरस्य परः शम्भुश्छन्दश्चाव्यक्तपूर्विका ।
गायत्री देवता चात्र सर्वमन्त्रेश्वरी परा ॥ १५ ॥
दीर्घत्रययुतं मूलं बीजं शक्तिश्च[11] कीलकम् ।
षड्दीर्घयुक्तमूलेन[12] षडङ्गानि च पार्वति ॥ १६ ॥
ईशतत्पुरुषाघोरसद्योजातात्मनस्तथा ।
पञ्चाङ्गुलिषु विन्यस्य मूर्त्ति वक्त्रेषु विन्यसेत्[13] ॥ १७ ॥
पञ्चसु[14] ब्रह्मणि तथैवाङ्गविन्यासमाचरेत् ।
आधारशक्तिमारभ्य पीठमन्त्रान्तमम्बिके[15] ॥ १८ ॥

---

1. ङ, वरानने । 2. ख, ङ, अथ । 3. क, ख, वात्म ।
4. ङ, सकृन्मूलेन स्मृत्वा च । 5. ङ, विनाशनम् ।
6. क, ङ, समुपवेशनं ; ग, घ, सद्मप्रवेशनं ।
7. ङ, देवीपूजाग्रतो ।
8. ङ, दीपनाथार्चनं ; ग, घ, दीपाद्यानयनं ।
9. क, दिग्बन्धनञ्च युग्मञ्च । 10. ङ, बीजमुक्तां ।
11. ङ, बीजशक्त्या ।
12. ख, षड्दीर्घमूलबीजेन ; ङ, षड्दीर्घमूलयुक्तेन ।
13. ङ, वर्जयेत् । 14. ङ, पञ्चधा । 15. घ, मन्त्रानुमन्त्रिके ।

अल्प[1]षोढां कुलेशानि कुर्यात् पूर्वोक्तवर्त्मना ।
महाषोढाह्वयं न्यासं ततः कुर्यात् समाहितः ।
वक्ष्यमाणेन विधिना देवताभावसिद्धये ॥ १९ ॥
यस्य कस्यापि नैवोक्तं[2] तव स्नेहाद्वदाम्यहम् ।
प्रपञ्चो[3] भुवनं मूर्त्तिर्मन्त्रदैवतमातरः ।
महाषोढाह्वयो न्यासः सर्वन्यासोत्तमोत्तमः[4] ॥ २० ॥
तत्रादौ परमेशानि प्रपञ्चन्यास उच्यते ।
प्रपञ्चद्वीपजलधिगिरिपत्तनपीठकाः[5] ॥ २१ ॥
क्षेत्रं वनाश्रमगुहानदीचत्वरकोद्भिदः[6] ।
स्वेदाण्डजजरायुजा इत्युक्तास्ते हि षोडश[7] ॥ २२ ॥
श्रीर्माया कमला विष्णुवल्लभा[8] पद्मधारिणी ।
समुद्रतनया लोकमाता कमलवासिनी ॥ २३ ॥
इन्दिरा मा[9] रमा पद्मा[10] तथा नारायणप्रिया ।
सिद्धलक्ष्मी[11] राजलक्ष्मीर्महालक्ष्मीरितीरिताः ।
शक्तयस्तु प्रपञ्चानां स्वराणामधिदेवताः ॥ २४ ॥
लवस्त्रुटिः[12] कला काष्ठा निमेषः श्वास एव हि ।
घटिका च मुहूर्त्तश्च प्रहरो दिवसस्तथा ॥ २५ ॥
सन्ध्या रात्रिस्तिथिश्चैव वारो नक्षत्रमेव च ।
योगश्च करणं पक्षौ मासो राशिर्ऋतुस्तथा ॥ २६ ॥
अयनं वत्सरयुगप्रलयाः पञ्चविंशतिः ।
एतेषां स्थानन्नियमो हृदयान्तः समीरितः ॥ २७ ॥

---

1. ख, अन्तः; ङ, अस्य ।
2. ङ, यस्य तस्य न वक्तव्यं । 3. घ, प्रपञ्चे ।
4. ङ, महापोढाह्वयं न्यास सर्वन्यासोत्तमोत्तमं ।
5. घ, पीठिकाः । 6. क, ग, घ, चत्वरकोद्भिदाः ।
7. ख, इत्युक्तानि च षोडश । 8. ख, बिन्दुवल्लभा ।
9. क, इन्दीवरा । 10. ङ, लक्ष्मीः ।
11. घ, ङ, सिद्धिर्लक्ष्मी । 12. क, नव कोटिः ।

आर्योमा चण्डिका दुर्गा शिवाऽपर्णा[1]ऽम्बिका सती ।
ईश्वरी शाम्भवीशानी पार्वती सर्वमङ्गला ॥ २८ ॥
दाक्षायणी हैमवती महामाया महेश्वरी ।
मृडानी चैव रुद्राणी सर्वाणी परमेश्वरी ॥ २९ ॥
काली कात्यायनी गौरी भवानीति समीरिता ।
शक्तयः स्युर्लवादीनां[2] स्पर्शाना[3]मधिदेवताः ।
एतासां स्थाननियमो हृदयान्तः समीरितः ॥ ३० ॥
पञ्चभूतानि तन्मात्रं ज्ञानकर्मेन्द्रियाणि च[4] ।
गुणान्तःकरणावस्था ध्यायेद्दोषान् दशानिलान्[5] ॥ ३१ ॥
ब्राह्मी वागीश्वरी[6] वाणी सावित्री च सरस्वती ।
गायत्री वाक्प्रदा पश्चात् सारदा भारती प्रिये ।
विद्यात्मिका पञ्चभूतव्यापकानामधीश्वराः ॥ ३२ ॥
वाग्भवं भुवनेशीञ्च लक्ष्मीबीजं त्रितारकम् ।
त्रितारमूलविद्यान्ते[7] मातृकाक्षरतः परम् ॥ ३३ ॥
वदेत् प्रपञ्चरूपायै श्रियै नम इति क्रमात् ।
प्रपञ्चादिभिरायोज्य[8] वर्णान् शक्तीर्नियोजयेत् ।
मातृकान्याससंप्रोक्तस्थानेष्वेवं न्यसेत् प्रिये[9] ॥ ३४ ॥
त्रितारमूलसकलप्रपञ्चादि[10]स्वरूपतः ।
आद्यै पराद्यादेव्यै[11]नम उक्त्वा व्यापकं न्यसेत् ॥ ३५ ॥
प्रपञ्चन्यास एव स्याद् भुवनन्यास उच्यते[12] ।
त्रितारमूलमन्त्रान्ते अं आं इं अतलं वदेत् ॥ ३६ ॥

---

1. ख, शिवपूर्णा । 2. क, र्भवादीनां; ख, ग, र्नरादीनां ।
3. क, पशूना । 4. ङ, न्द्रियानिलाः ।
5. ख, ङ, धत्ते दोषो दशेरिताः । 6 ख, माहेश्वरी ।
7. ङ, मन्त्रान्ते । 8. क, दिभिराद्यैव; ङ, दिभिराद्यन्ते ।
9. ख, मातृकान्याससंप्रोक्तस्थानेषु परमेश्वरि ।
10. ख, प्रपञ्चः स्यात् । 11. ङ, पराम्बादेव्यै ।
12. ङ, न्यासमाचरेत् ।

लोकञ्च निलयञ्चैव शतकोटिपदं[1] ततः ।
गुह्याद्या योगिनी मूलङेयुतन्तु[2] वदेत् प्रिये ॥ ३७ ॥
वदेदाधारशक्त्यम्बादेव्यै च[3] पादयोर्न्यसेत् ।
ईं उं ऊं[4] वितलं गुह्यतरं[5] चानन्तसंज्ञकम् ।
शेषञ्च पूर्ववत् प्रोच्य गुल्फयोर्देवि विन्यसेत् ॥ ३८ ॥
ऋं ॠं लं सुतलञ्चातिगुह्यं चाचिन्त्यसंज्ञकम् ।
शेषञ्च पूर्ववत् प्रोच्य जङ्घयोर्विन्यसेत् प्रिये[6] ॥ ३९ ॥
ॡं एं ऐं महातलञ्च महागुह्यं पदं ततः ।
शेषञ्च पूर्ववत् प्रोच्य देवि जान्वोः प्रविन्यसेत् ॥ ४० ॥
ओं औं तलातलं देवि परं गुह्याभिधानकम्[7] ।
शेषञ्च पूर्ववत् प्रोच्य ऊर्वोर्देवेशि विन्यसेत् ॥ ४१ ॥
अं अः रसातलञ्चैव[8] रहस्यं ज्ञानसंज्ञकम् ।
शेषञ्च पूर्ववत् प्रोच्य गुह्यदेशे प्रविन्यसेत् ॥ ४२ ॥
कवर्गेणापि पातालं लोकेति निलयेति च[9] ।
शेषञ्च पूर्ववत् प्रोच्य मूलाधारे तु विन्यसेत् ॥ ४३ ॥
चवर्गं भूतलञ्चेति[10] रहस्यं डाकिनीमपि ।
शेषञ्च पूर्ववत् प्रोच्य स्वाधिष्ठाने न्यसेत् प्रिये ॥ ४४ ॥
टवर्गेण भुवो लोकं[11] रहस्यं राकिणीमपि ।
शेषञ्च पूर्ववत् प्रोच्य नाभौ च विन्यसेत् प्रिये ॥ ४५ ॥
तवर्गं स्वश्च परमरहस्यं लाकिनीमपि ।
शेषञ्च पूर्ववत् प्रोच्य हृदये विन्यसेत् प्रिये ॥ ४६ ॥

---

1. क, वानन्तकोटि पदं । 2. क, ख, ग, घ, देवतान्ते युतं ।
3. ख, हृत् ; ङ, तत् । 4. ङ, ईमुलं ।
5. ख, अतिगुरु ; ग, घ, गुह्यतमाद्यानन्तसंज्ञकं ।
6. ग, देवि जान्वोः प्रविन्यसेत् ।
7. ख, परमगुह्यं चोक्त्वा विधानकं ।
8. ग, घ, सर्वतलञ्चैव । 9. ख, सरहस्यतरं क्रियां ।
10. ङ, रहस्याति । 11. ङ, च भुवो महा ।

पवर्गञ्च महर्लोकं[1] रहस्यं काकिनीमपि ।
शेषञ्च पूर्ववत् प्रोच्य तालुमूले न्यसेत् प्रिये ॥ ४७ ॥
यवर्गञ्च जनो गुप्ततरञ्च[2] शाकिनीमपि ।
शेषञ्च पूर्ववत् प्रोच्य आज्ञायाञ्च न्यसेत् प्रिये ॥ ४८ ॥
शवर्गञ्च तपश्चातिगुह्यञ्च हाकिनीमपि ।
शेषञ्च पूर्ववत् प्रोच्य ललाटे विन्यसेत् प्रिये ॥ ४९ ॥
ळं क्षं[3] सत्यं महागुह्यं यक्षिणी[4]मपि च प्रिये ।
शेषञ्च पूर्ववत् प्रोच्य ब्रह्मरन्ध्रे च विन्यसेत् ॥ ५० ॥
त्रितारमूलमन्त्रान्ते चतुर्दशभुवं[5] वदेत् ।
नाधिपायै श्रीपरायै[6] देव्यै च व्यापकं न्यसेत् ॥ ५१ ॥
कृत्वैवं भुवनन्यासं मूर्त्तिन्यासमथाचरेत् ।
केशवनारायणमाधवगोविन्दविष्णवः ॥ ५२ ॥
मधुसूदनसंज्ञश्च स्या[7]त्त्रिविक्रमवामनौ ।
श्रीधरश्च हृषीकेशः पद्मनाभो दामोदरः ।
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥ ५३ ॥
अक्षोल्केन्द्राणी चेशानी चोग्रार्द्धनयना तथा * ।
ऋद्धिश्च रूपिणी लूका[8] नूनदोषैक[9]नायिका ॥ ५४ ॥
ऐङ्कारिणी चौघवती[10] सर्वकामाञ्जनप्रभा ।
अस्थि[11]मालाधरा चेति सम्प्रोक्ताः स्वरदेवताः ॥ ५५ ॥

---

* श्लोकार्द्धमिदं क पुस्तके नास्ति; ग पुस्तके इतः प्राक् "अक्षराण्यकारादीनि सर्वेषामग्रतः प्रिये" इति श्लोकार्द्धमधिकं दत्त्वा अक्षोल्केन्द्राणी चेशानीत्यत्र "इत्युक्तेन्द्राणी"ति पाठो दत्तः ।

1. ङ, महागुह्य ।
2. क, लोकगुप्तश्री ; ख, चातिगुप्तश्री ।
3. ङ, लक्षं । 4. ङ, याकिनी । 5. ख, स्वरं ।
6. ङ, पराम्बा । 7. क, श्री । 8. ङ, मूका ; ख, लुप्ता ।
9. ख, शेषैक ।
10. घ, चोग्रवती ; ङ, चोच्चवती ।
11. ख, मोक्ष ।

भवः शर्वोऽथ रुद्रश्च पशुपतिश्चोग्र एव च ।
महादेवस्तथा भीम ईशस्तत्पुरुषाह्वयः ॥
अघोरसद्योजातौ च वामदेव इतीरिताः ॥ ५६ ॥
करभद्रा खगचला[1] गरिमादिफलप्रदा ।
घण्टाधरोग्रनयना चन्द्रधर्वी ततः परम्[2]* ।
छन्दोमयी जगत्स्थाना ज्वलत्तारा[3] ततः परम् ॥ ५७ ॥
ज्ञानदा च[4] टङ्कधरा धृतिर्द्वादश ईरिताः[5] ।
कभादीनां ठ[6]डान्तानां वर्णानां देवतास्त्विमाः ॥ ५८ ॥
ब्रह्मा प्रजापतिर्वेधाः परमेष्ठी पितामहः ।
विधाता च विरिञ्चिश्च स्रष्टा च चतुराननः ॥
हिरण्यगर्भ इत्युक्ताः क्रमाद् ब्रह्मादयो दश ॥ ५९ ॥
यक्षिणी रञ्जिनी लक्ष्मीर्वज्रिणी शशिधारिणी ।
षडाधारलया[7] सर्वनायिका हसितानना[8] ।
ललिता च क्षमा चेति प्रोक्ता याद्यर्ण[9]देवताः ॥ ६० ॥
त्रितारमूलमन्त्रान्ते स्वरान् विष्णून् सशक्तिकान् ।
चतुर्थ्या नमसा युक्तान् मस्तके चानने न्यसेत् ॥ ६१ ॥
सस्कन्धपार्श्वकट्यूरु[10] जानुजङ्घपदेषु च ।
दक्षादिवामपर्यन्तं विन्यसेत् परमेश्वरि ॥ ६२ ॥

---

* ङ पुस्तके श्लोकार्द्धमिदं न दृश्यते ।

1. क, युगचला ; ख, खगवला ।
2. ख, घोरपादा पंक्तिनाथा तथा चन्द्रार्द्धधारिणी ।
3. ख, छन्दोदरी जगत्स्थाता ज्वलत्कारा ।
4. ख, ज्ञानदाता ।
5. ख, तथा टङ्कृतिडामरा ; ङ, तथा टङ्कृतिरीरिताः ।
6. ड, कभादीनाञ्च ।
7. ख, षडाधारा यथा ; घ, षोढाधारालया ।
8. क, असितानना ।
9. क, माद्यन्तु ; ङ, स्ताल्वन्त ।
10. ख, पार्श्वकाद्यूरु ; ङ, पार्श्वकण्ठोरु ।

कभाद्यर्णयुतान्[1] मन्त्री[2] भवादीन् शक्तिसंयुतान् ।
पादपार्श्वबाहुकण्ठपञ्चवक्त्रेषु विन्यसेत् ।
दशाधारेषु[3] ब्रह्मादीन् यादि[4] शक्तियुतान्न्यसेत् ॥ ६३ ॥
त्रितारमूलमन्त्रान्ते श्रीत्रिमूर्त्यम्बिकां[5] वदेत् ।
आयै पराम्बादेव्यै[6] च नमसा व्यापकं न्यसेत् ॥
मूर्त्तिन्यासं विधायेत्थं मन्त्रन्यासं समाचरेत् ॥ ६४ ॥
त्रितारमूलं अं आं इं[7] एकलक्षञ्च कोटि च ।
भेदश्च प्रणवाद्येकाक्षरात्माखिलमन्त्रतः ॥ ६५ ॥
ततोऽधिदेवतायै स्यात् सकलञ्च फलप्रदाम्[8] ।
आयै तथैककूटेश्वर्यम्बादेव्यै नमो वदेत् ॥ ६६ ॥
ईं उं ऊं आदि[9] हंसादि द्विकूटं[10] पूर्ववत् परम् ।
ऋं ॠं लं आदि वह्न्यादि त्रिकूटं[11] पूर्ववत् परम् ॥ ६७ ॥
ॡं एं ऐं चतुर्लक्षं चन्द्रादि पूर्ववत् परम् ।
ओं औं अं अः पञ्चलक्षं सूर्यादि पूर्ववत् परम् ॥ ६८ ॥
कं खं गं चैव षड्लक्षं स्कन्दादि पूर्ववत् परम् ।
घं ङं चं सप्तलक्षं गणेशादि पूर्ववत् परम् ॥ ६९ ॥
छं जं झं अष्टलक्षं वटुकादि[12] पूर्ववत् परम् ।
ञं टं ठं नवलक्षञ्च ब्रह्मादि[13] पूर्ववत् परम् ॥ ७० ॥
डं ढं णं दशलक्षञ्च विष्णादि पूर्ववत् परम् ।
तं थं दं एकादशलक्षं रुद्रादि पूर्ववत् परम् ॥ ७१ ॥

---

1. ङ, फड़ाद्यन्तयुतान् । 2. ख, मन्त्रान् ।
3. ड, दशस्थानेषु । 4. घ, ड, आदि ।
5. क, ड, श्रीत्रिमूर्त्यात्मिका ; ख, त्रिमूर्त्यात्मकतां ।
6. क, परायै देव्यै । 7. ङ, त्रितारमूलमन्त्रान्ते ।
8. ड, फलप्रदा । 9. ख, यादि ; ङ, द्व्यादि ।
10. क, द्विलक्षकूटं ।
11. ग, आदित्यादि ; घ, आदिवर्गादि ; ड, त्र्यादिकूटं ।
12. कं, रुद्रादि । 13. ङ, शिवादि ।

धं नं पं द्वादशलक्षं वाण्यादि[1] पूर्ववत् परम् ।
फं बं भं त्रयोदशलक्षं लक्ष्म्यादि पूर्ववत् परम् ॥ ७२ ॥
मं यं रं चतुर्दशलक्षं गौर्य्यादि पूर्ववत् परम् ।
लं वं शं पञ्चदशलक्षं दुर्गादि पूर्ववत् परम् ।
षं सं हं लं क्षं[2] षोडशलक्षं त्रिपुरादि च षोडश ॥ ७३ ॥
अक्षरात्मा[3] खिलमन्त्राधिदेवतायै सकलं ततः ।
तथा फलप्रदायै च षोडश कूटेश्वरी[4] पुनः ॥ ७४ ॥
अम्बादेव्यै नमः प्रोक्तो मन्त्रन्यासो महेश्वरि ।
आधारलिङ्गयोर्नाभिहृत्कण्ठे नेत्रयोरपि[5] ॥ ७५ ॥
निबोधिकायामर्द्धेन्दौ बिन्दौ चैव कलापदे* ।
उन्मन्यां विष्णुवक्त्रे च[6] नादे नादान्त एव च ।
ध्रुवमण्डलदेशे च[7] विन्यसेत् कुलनायिके ॥ ७६ ॥
त्रितारमूलमन्त्रान्ते सर्वमन्त्रात्मिकापदम् ।
आद्यै पराम्बादेव्यै च हृदये व्यापकं न्यसेत् ॥ ७७ ॥
मन्त्रन्यासं विधायेत्थं दैवतन्यासमाचरेत्[8] ।
त्रितारमूलमन्त्रान्ते अं आं सहस्रकोटि च ॥ ७८ ॥
योगिनीकुलशब्दान्ते सेवितायै पदं वदेत्[9] ।
निवृत्त्यम्बापदं[10] देव्यै नम इत्युच्चरेत् प्रिये ॥ ७९ ॥

---

* ङ पुस्तके पद्यार्द्धमिदं न दृश्यते ।

1. ग, राश्यादि ।
2. खयाद्यन्ता ; ङ, षं सं हं ।
3. ख, कूटाद्या ; ङ, क्षरात्मा ।
4. ङ, ईश्वरी ।
5. ख, कण्ठास्याक्षिषु च न्यसेत् ; ङ, हृत्कण्ठेषु च विन्यसेत् ।
6. ख, नादे नादान्ते च शक्तौ विन्यसेत् कुलनायिके ; ङ, बिन्दौ तदूर्ध्वसुन्मन्यां ।
7. ङ, भ्रूमण्डले ब्रह्मरन्ध्रे ।
8. घ, देवतान्यास उच्यते ।
9. क, ग, घ, न्यसेत् ।
10. ङ, निवृताम्बापदात् ।

इं ईं[1] योगिनीप्रतिष्ठां[2] शेषं पूर्ववदुच्चरेत्[3] ।
उं ऊं तपस्वि[4]विद्याञ्च शेषं पूर्ववदुच्चरेत्[5] ॥ ८० ॥
ऋं ॠं शान्तं तथा शान्तिं शेषं पूर्ववदुच्चरेत् ।
लृं ॡं मुनिं शान्त्यतीतां शेषं पूर्ववदुच्चरेत् ॥ ८१ ॥
एं ऐं देवञ्च हृल्लेखां शेषं पूर्ववदुच्चरेत् ।
ओं औं राक्षसशब्दान्ते गगनां[6] पूर्ववत् परम् ।
अं अः विद्याधरं रक्तां शेषं पूर्ववदुच्चरेत् ॥ ८२ ॥
कं खं सिद्धिमहोच्छुष्मां[7] शेषं पूर्ववदुच्चरेत् ।
गं घं साध्यकरालाञ्च[8] शेषं पूर्ववदुच्चरेत् ॥ ८३ ॥
ङं चं साप्सरसं जयां[9] शेषं पूर्ववदुच्चरेत् ।
छं जं गन्धर्वविजयां शेषं पूर्ववदुच्चरेत् ॥ ८४ ॥
झं ञं गुह्यकशब्दान्ते अजितां पूर्ववत् परम्[10] ।
टं ठं यक्षापराजितां[11] शेषं पूर्ववदुच्चरेत् ॥ ८५ ॥
डं ढं किन्नरवामाञ्च[12] शेषं पूर्ववदुच्चरेत् ।
णं तं पन्नगज्येष्ठाञ्च शेषं पूर्ववदुच्चरेत् ॥ ८६ ॥
थं दं च पितृरौद्राम्बां[13] शेषं पूर्ववदुच्चरेत् ।
धं नं गणेशमायाञ्च शेषं पूर्ववदुच्चरेत्[14] ॥ ८७ ॥
पं फं भैरवशब्दान्ते कुण्डलीं पूर्ववत् परम् ।
बं भं वटुक[15]कालीञ्च शेषं पूर्ववदुच्चरेत् ॥ ८८ ॥

---

1. ङ, इमां ।
2. ख, योगप्रतिष्ठाञ्च ।
3. ङ, दाचरेत् ।
4. ङ, तपस्वी ।
5. ङ, दाचरेत् ।
6. क, ग, शेषं पूर्व्ववदुच्चरेत् ।
7. ख, सिद्धं महोच्छुष्मा ; ङ, कं खं महोग्राभां ।
8. ङ, साध्यमहाकरालां ।
9. ङ, तथास्मरो जायां ।
10. क, अजिताशेषं पूर्ववत् परम् ; ङ, शेषं पूर्ववदुच्चरेत् ।
11. ख, यक्षं पराजितां ; ङ, वक्षोऽपराजितां ।
12 ग, किन्नरबालाञ्च ।
13. ख, पितृरौद्री स्तः ।
14 क, गणेशशब्दान्ते कालरात्रिञ्च पूर्व्ववत् ।
15 ख, वटुकं ।

मं यं क्षेत्रेशशब्दान्ते कालरात्रिञ्च पूर्ववत्[1] ।
रं लं प्रमथभगवतीं[2] शेषं पूर्ववदुच्चरेत् ॥ ८९ ॥
वं शं ब्रह्मसर्वेश्वरीं[3] शेषं पूर्ववदुच्चरेत् ।
षं सं विष्णुञ्च सर्वज्ञां शेषं पूर्ववदुच्चरेत् ॥ ९० ॥
हं लं रुद्रसर्वकर्त्री शेषं पूर्ववदुच्चरेत् ।
क्षं चराचरशक्तिञ्च शेषं पूर्ववदुच्चरेत्[4] ॥ ९१ ॥
अङ्गुष्ठगुल्फजङ्घासु जानूरुकटिपार्श्वके ।
स्तनकक्ष[5]करस्कन्धकर्णमूर्द्धस्वपि क्रमात् ॥ ९२ ॥
दक्षभागादिवामान्तं विन्यसेत् कुलनायिके ।
त्रितारमूलमन्त्रान्ते सर्वदेवात्मिकां पदम् ॥ ९३ ॥
आद्यै पराम्बादेव्यै च हृदये व्यापकं न्यसेत् ।
देवन्यासं विधायेत्थं मातृकान्यासमाचरेत् ॥ ९४ ॥
त्रितारमूलमन्त्रान्ते कवर्गानन्तकोटिभू ।
चरीकुलसेवितायै[6] आं क्षां हि मङ्गलापदम् ॥ ९५ ॥
अम्बादेव्यै नमो[7] ब्रूयादां क्षां ब्रह्माण्यतः[8] परम् ।
अम्बादेव्यै ततोऽनन्तकोटिभूतं कुलं[9] वदेत् ॥ ९६ ॥
सहिताय ततो मङ्गलनाथाय अं क्षं[10] वदेत् ।
अं क्षं असिताङ्गभैरवनाथाय[11]नम उच्चरेत् ॥ ९७ ॥

---

1. ख, क्षेत्रेशं कालरात्रिञ्च शेषं पूर्व्ववदुच्चरेत् ।
2. क, प्रथमं भगवती ; घ, ङ, प्रथमभगवतीं ।
3. क, ब्रह्मसर्वेश्वर्या; ग, ब्रह्मसर्वेश्वर्यादि; ङ, ब्रह्मासर्वेश्वरीं ।
4. ङ, चराचरशब्दान्ते कुलशक्तिञ्च पूर्व्ववत् ।
5. ङ, वक्षः ।
6. क, ख, ग, घ, चरीकुलञ्च सहितायै ।
7. ख, अं वामादेव्यै ततो ।
8. ङ, द्राक्षां ब्रह्मनाले ततः ।
9. ख, कोटिभूतपदं ; ङ, भूतं ततो ।
10. ख, सहिताय ततः क्षं मङ्गलनाथाय तं ; ङ, सेविताय ततः अं क्षं मङ्गलनाथाय ततो ।
11. ङ, अं क्षं असिताङ्गभैरवाय ।

चवर्गं खेचरीं ईं लां चर्चिकाञ्च महेश्वरीम्[1] ।
वेतालं इं लं चर्चिकं[2] रुरुं शेषञ्च पूर्ववत् ॥ ९८ ॥
टवर्गं पातालचरीं ऊं ह्रां योगेश्वरी वदेत् ।
कौमारीञ्च पिशाचञ्च उं ह्रं योगेशचण्डकौ ॥ ९९ ॥
तवर्गं दिक्चरीं ऋं सां हरसिद्धाञ्च[3] वैष्णवीम् ।
अपस्मारं ऋं[4] सं हरसिद्धक्रोधादिपूर्ववत्[5] ॥ १०० ॥
पवर्गं सहचरीं ॡं षां भट्टिं वाराह्यत:[6] परम् ।
ब्रह्मराक्षसकं ऌं षं भट्टोन्मत्तादि पूर्ववत् ॥ १०१ ॥
यवर्गं स्याद्गिरिचरीं[7] ऐं शां किलकिलेति च[8] ।
इन्द्राणीं चेटकं एं शं किलि: कापालिकस्तथा[9] ॥ १०२ ॥
शवर्गं स्यात् वनचरीं औं वां कालादिरात्रि च[10] ।
चामुण्डां प्रेतं ओं वं च कालरात्रिश्च भीषण:[11] ॥ १०३ ॥
लं क्षं जलचरीं अ: लां वदेत्[12] पश्चाच्च भीषणाम् ।
महालक्ष्मीं शाकिनीश्च अं लं पश्चाच्च भीषणम्[13] ॥ १०४ ॥
संहारभैरवञ्चैव शेषं पूर्ववदुच्चरेत् ।
मूलाधारलिङ्गनाभिष्वनाहतविशुद्धयो: ॥ १०५ ॥

---

1. ख, चवर्गं खेचरी ईं नां चर्च्चिकाम्वेशानी तथा; ङ, चवर्गं खेचरी ईं णीं चाकचर्च्चिका च महेश्वरी; ग, चवर्गं खेचरीमीवां चर्च्चिताञ्च महेश्वरीम् ।

2. ख, चर्व्विकं; ङ, वेताल म ईं लां चर्व्विकं ।

3. ङ, ऋं हरसिद्धान्त । 4. ङ, ऋं ।

5. क, ख, ग, घ, अपस्मारं संहारसिद्धि क्रोधादिपूर्व्ववत् ।

6. ख, भट्टिं वाराद्यत: परम्; घ, संहारवाह्यत: ।

7. ङ, द्विवि चरीं । 8. ङ, किलिकिलीति च ।

9. ख, किलिकिल: कपोलिक:; क, ग, घ, किलिकिला कापालिक: ।

10. ङ, देवि कालादिरात्रि च । 11. ङ, चामुण्डां ओ वं उच्चार्य ।

12. ङ, लक्षं जलचरीं मां लां भवेत् ।

13. क, अं लाञ्च महालक्ष्मी शाकिन्यं नञ्चभीषणं; ख, महालक्ष्मी-राकिणीञ्च अं लं पश्चाच्च भीषण:; ग, घ, अं : लाञ्चमहालक्ष्मी शाकिन्यनञ्च भीषणा: ।

आज्ञाभाल[1]तलब्रह्मरन्ध्रेष्वेवं प्रविन्यसेत् ।
त्रितारमूलमन्त्रान्ते मातृभैरवशब्दतः ॥ १०६ ॥
अधिपायै पराम्बा[2]देव्यै नमो व्यापकं न्यसेत् ।
मातृन्यासं महेशानि कुर्यादेवं समाहितः ॥ १०७ ॥
एवं न्यस्ततनुर्देवि ध्यायेद्देव[3]मनन्यधीः ।
अमृतार्णवमध्योद्यन्मणिद्वीपे सुशोभिते[4] ॥ १०८ ॥
कल्पवृक्षवनान्तःस्थमणि[5]माणिक्यमण्डपे ।
नवरत्नमय[6]श्रीमत्सिंहासनगते[7]ऽम्बुजे ॥ १०९ ॥
त्रिकोणान्तःसमासीनं चन्द्रसूर्यायुतप्रभम्[8] ।
अर्द्धाम्बिकासमायुक्तं प्रविभक्तविभूषणम् ॥ ११० ॥
कोटिकन्दर्पलावण्यं सदा षोडशवार्षिकम् ।
मन्दस्मितमुखाम्भोजं त्रिनेत्रं चन्द्रशेखरम्[9] ॥ १११ ॥
दिव्याम्बरस्रगालेपं[10] दिव्याभरणभूषितम् ।
पानपात्रञ्च चिन्मुद्रां त्रिशूलं पुस्तकं करैः[11] ॥ ११२ ॥
विद्यासंसिद्धिं बिभ्राणं सदानन्दमुखेक्षणम् ।
महाषोढोदिताशेषदेवतागणसेवितम् ॥ ११३ ॥
एवं चित्ताम्बुजे ध्यायेदर्द्धनारीश्वरं शिवम् ।
पुंरूपं वा स्मरेद्देवि स्त्रीरूपं वा विचिन्तयेत् ॥ ११४ ॥
अथवा निष्कलं ध्यायेत् सच्चिदानन्दलक्षणम् ।
सर्वतेजोमयं देवि सचराचरविग्रहम् ॥ ११५ ॥

---

1. ख, फल । 2. ख, परात्मा । 3. ङ, ध्यायेद्देवी ।
4. ग, घ, मध्यस्थसुवर्णद्वीपशोभिते । 5. ख, ङ, नव ।
6. ख, नवमहोमय ; ङ, नवरत्नमयं ।
7. ग, घ, सिंहासनमहाम्बुजे ।
8. ङ, चन्द्रसूर्यसमन्वितम् ।
9. ङ, चन्द्रचूडकम् ।
10. ग, घ, युगालेपं ।
11. क, दक्षिणे करे ।

ततः सन्दर्शयेन्मुद्रादशकं[1] परमेश्वरि ।
योनिं लिङ्गञ्च सुरभिं हेति[2]मुद्राचतुष्टयम् ॥ ११६ ॥
वनमालां[3] महामुद्रां नभोमुद्रामिति[4] क्रमात् ।
यथाशक्ति मन्त्रमूलं जपेत् ईपादुकामपि ।
मूर्द्धिन सञ्चिन्तयेद्देवि श्रीगुरुं शिवरूपिणम् ॥ ११७ ॥
सहस्रदलपङ्कजे सकलशीतरश्मिप्रभम्
वराभयकराम्बुजं विमलगन्धपुष्पाम्बरम्[5] ।
प्रसन्नवदनेक्षणं सकलदेवतारूपिणम्
स्मरेत् शिरसि हंसगं तदभिधानपूर्वं गुरुम् ॥ ११८ ॥
एवं न्यासे कृते देवि साक्षात् परशिवो[6] भवेत् ।
मन्त्री नैवात्र सन्देहो निग्रहानुग्रहक्षमः ॥ ११९ ॥
महाषोढाह्वयं न्यासं यः करोति दिने दिने ।
देवाः सर्वे नमस्यन्ति तं नमामि न संशयः ॥ १२० ॥
महाषोढाह्वयं न्यासं करोति यत्र[7] पार्वति ।
दिव्यक्षेत्रं समुद्दिष्टं समन्ताद्दशयोजनम् ॥ १२१ ॥
कृत्वा न्यासमिमं देवि यत्र गच्छति मानवः ।
तत्र स्याद्विजयो लाभः सम्मानः पौरुषं प्रिये ॥ १२२ ॥
महाषोढाकृतन्यासस्तेन यो वन्द्यते शिवे[8] ।
षण्मासान्मृत्युमाप्नोति[9] यदि त्राता शिवः स्वयम्[10] ॥ १२३ ॥
वज्रपञ्जरनामानमेतं[11] न्यासं करोति यः ।
दिव्यन्तरीक्षभूशैलजलारण्यनिवासिनः ॥ १२४ ॥

---

1. ख, समस्तां । 2. ङ, चेति । 3. ड, माला ।
4. क, ख, ग, घ, नवमुद्रामयीं । 5. ङ, पुष्पस्रजम् ।
6. क, पराशरो ।
7. ख, ङ, यः करोति हि ।
8. ख, स्तदङ्गं यदि वन्दते ; ङ, स्तदीक्षयति वन्दितः ।
9. ख, ड, मासान्मृत्युमवाप्नोति ।
10. ड, सदाशिवः ।
11. ड, नामेदं मन्त्री ।

प्रचण्डभूतवेतालदेवरक्षोग्रहादयः[1] ।
भयग्रस्तेन मनसा नेक्षन्ते तं कुलेश्वरि ॥ १२५ ॥
महाषोढाकृत[2]न्यासं ब्रह्मविष्णुशिवादयः ।
देवाः सर्वे नमस्यन्ति[3] ऋषयोऽपि मुनीश्वराः ॥ १२६ ॥
बहुनोक्तेन किं देवि न्यासमेतं मम प्रियम्[4] ।
नापुत्राय वदेद्देवि नाशिष्याय प्रकाशयेत्[5] ॥ १२७ ॥
आज्ञासिद्धिमवाप्नोति तस्मान्न्यासं समाचरेत्[6] ।
अस्मात् परतरा रक्षा[7] देवताभावसिद्धिदा ।
लोके नास्ति न सन्देहः सत्यं सत्यं वरानने[8] ॥ १२८ ॥
ऊर्द्ध्वाम्नायप्रवेशश्च[9] पराप्रासादचिन्तनम् ।
महाषोढापरिज्ञानं नाल्पस्य तपसः फलम् ॥ १२९ ॥
इति ते कथितं देवि मन्त्रोद्धारादिकं[10] प्रिये ।
समासेन कुलेशानि किं भूयः श्रोतुमिच्छसि ॥ १३० ॥

इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये
सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चम-
खण्डे ऊर्द्ध्वाम्नायतन्त्रे महाषोढाकथनं
नाम चतुर्थ उल्लासः ॥ ४ ॥

1. ङ, यक्षोरगादयः । 2. ख, ङ, ह्ययं ।
3. ख, ङ, प्रकुर्वन्ति । 4. ङ, नाशिष्याय प्रकाशयेत् ।
5. ङ, नापराय च देवेशि अन्यशिष्यप्रदायिका ।
6. ख, रहसि न्यासमाचरेत् । 7. ङ, अतः परतरः साक्षात् ।
8. ङ, सत्यमेतद्ब्रदाम्यहं । 9. ङ, ञ्च ।
10. ङ, किञ्चिन्महान्यासादिकं ।

# पञ्चम उल्लासः।



श्रीदेव्युवाच।

कुलेशाधारपात्राणां पिशितानाञ्च लक्षणम्।
कुलद्रव्यस्य निर्माणं भेदं माहात्म्य[1]मेव च ॥ १ ॥
अविधानेन यत् पापं सविधानेन यत् फलम्।
तत् सर्व श्रोतुमिच्छामि वद मे करुणानिधे ॥ २ ॥

ईश्वर उवाच।

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि।
तस्य श्रवणमात्रेण त्रिदशैः समतां व्रजेत् ॥ ३ ॥
आधारेण विना भ्रंशो न च तृप्यन्ति[2] मातरः।
तस्माद्विधिवदाधारं कल्पयेत् कुलनायिके ॥ ४ ॥
आधारं त्रिपदं[3] प्राहुः षट्पदं वा चतुष्पदम्।
अथवा वर्तुलाकारं कुर्याद्देवि मनोहरम्[4] ॥ ५ ॥
स्वर्णरौप्यशिलाकूर्मकपालालाबुमृण्मयम्[5]।
नारिकेलशङ्खताम्रमुक्ताशुक्तिसमुद्भवम्[6] ॥ ६ ॥
पुण्यवृक्ष[7]समुद्भूतं पात्रं कुर्याद्विचक्षणः।
अतिसूक्ष्ममतिस्थूलं छिन्नं भिन्नञ्च वर्जयेत्* ॥ ७ ॥

---

* ख पुस्तके इतः परं "ताम्रकांस्यादिभिर्लोहैः पात्रं नैव तु कारयेत्" इति श्लोकार्द्धमधिकं दृश्यते।

1. ख, ङ, भेदमाहात्म्य। 2. ङ, गृह्णन्ति। 3 क, त्रिविधं।

4. घ, ङ, मनोरमम्।

5. ङ, स्वर्णरौप्यमयैः कूर्मकपालालाबुमृण्मयैः।

6. ख, नारिकेलं शङ्खमुक्ताशुक्तिकाचसमुद्भवम्। 7. ङ, पुण्यक्षेत्र।

सुवर्णरौप्यताम्राणि[1] सर्वसिद्धिकराणि च ।
शान्तिके च शिलापात्रं[2] स्तम्भने चैव मृण्मयम् ॥ ८ ॥
नारिकेलञ्च वश्ये स्यादभिचारे[3] च कूर्मजम् ।
शङ्खं ज्ञानप्रदं शुक्तिर्देवीप्रीतिप्रदायिनी[4] ॥ ९ ॥
कपालालाबुपात्राणि योगसिद्धिकराणि[5] च ।
पुण्यवृक्षज[6] पात्राणि सर्वपापहराणि च ।
उक्तेष्वेतेषु देवेशि[7] पात्रमेकं प्रकल्पयेत् ॥ १० ॥
कुलद्रव्यं प्रवक्ष्यामि शृणु देवि समाहिता[8] ।
अम्भसां द्वादशप्रस्थं प्रस्थार्द्धं तक्रमेव च ॥ ११ ॥
तण्डुलानां चतुःप्रस्थं द्विप्रस्थञ्च तथान्धसाम्[9] ।
मुष्टिमालाङ्कुरैः सार्द्धम् एकस्मिन् योजयेद्[10]घटे ॥ १२ ॥
शीतादिरहिते स्थाने स्थापयेद्दिवसद्वयम्[11] ।
तस्मादग्नि[12] समारोप्य जम्बालसदृशं पचेत्[13] ॥ १३ ॥
अवरोप्य पुनः शीतामवस्थां प्रापयेत्ततः[14] ।
पादोनप्रस्थकैः पिष्ट्वा[15] हस्ताभ्यां मेलयेत् सुधीः ॥ १४ ॥

---

1. ङ, स्वर्णरौप्याणि ताम्राणि ।
2. ङ, चपलापात्रं ।
3. क, वश्यादावभिचारे ।
4. क, मुक्ताशुक्तिर्विद्याप्रदायिनी ; ख, मुक्ताशुक्तिः प्रीति-दायिनी ।
5. ङ, सर्वपापहराणि ।
6. ङ, पुण्यक्षेत्रज ।
7. ङ, पात्रेषु । 8. ख, समासतः ।
9. ग, घ, ङ, तथाम्भसां ।
10. ङ, मुष्टिमालाङ्कुरो देवि एकस्मिन्मेलयेद् ।
11. ख, दिवसद्वयमानतः ; ङ, स्थापयेद्वीरवेश्मनि ।
12. ङ, पश्चादग्नौ ।
13. ख, दिवसे मास्यनास्तृतम् ; ग, जलकर्दमवत् पचेत् ।
14. क, शीतमवपादेन प्रस्थकैः ; ख, शीतमवघाताङ्कुरैः सह ।
15. ख, पक्त्वा ।

प्रस्थार्द्धान् तण्डुलान् वाप्य[1]परेद्युस्तत् समुद्धरेत्[2]।
सम्यक् संमर्द्य तक्रेण पाकमालोड्य मेलयेत्[3]*।
एषा पैष्टीति विख्याता पूजिता देवदानवैः ॥ १५ ॥
गौडी च श्वेतवर्वुरजम्बुत्वक्साधिताम्भसाम्[4]।
दशप्रस्थं कुलेशानि धातकीकुसुमं शुभम्[5] ॥ १६ ॥
नारिकेलप्रसूनं वा चैकप्रस्थं विनिक्षिपेत्।
हरीतकी चाक्षफलं[6] वसुनिष्कप्रमाणतः[7] ॥ १७ ॥
वह्निं त्रिकटुकञ्चापि निष्कमात्रं क्षिपेत् पृथक्[8]।
अशीतिगुडसम्मिश्रमेकस्मिन् योजयेद् घटे[9] ॥ १८ ॥
करेण भ्रामयेत् सम्यगनुलोमविलोमतः।
अष्टोत्तरशतावृत्त्या त्रिसन्ध्यं प्रतिवासरम्[10] ॥ १९ ॥
द्वादशाहेन पाकः स्यात् पालयेत्तत्त्रयोदशे[11]।
एषा गौडीति कथिता शिवसायुज्यहेतुकी[12] ॥ २० ॥

---

* ख पुस्तके इतःपरं
"मूलार्द्धभूतले देवि रहःस्थाने विनिक्षिपेत्।
एकाहम्बा परेद्युस्तत् सर्व्वमेव समाङ्गुरैः" इत्यधिको दृश्यते।

1. क, पक्त्वा।
2. क, परेद्युस्तत् समाङ्कुरैः।
3. क, पाकमालोक्य; ख, मेलयित्वा विचक्षणः।
4. क, गौडी चाश्वत्थवकुलजम्बुत्वक्साधिताम्भसा; ग, घ, गौडी चाश्वत्थवञ्जुल; ङ, गौडी चूर्णमयो वञ्जुलत्वक् सहसाम्भसा।
5. ख, तुवा; ङ, समं।
6. क, ग, घ, चार्द्रफलं।
7. ख, दशनिष्कप्रमाणतः।
8. ङ, निष्कमात्रप्रमाणतः।
9. ख, गुडद्वादश; ङ, गुडसंमिश्रमेकस्मिन् योजयेत् सुदृढे घटे।
10. ङ, त्रिषु रात्रिन्दिवं मतम्।
11. क, ज्वालयेत्तत्त्रयोदशे; ङ, दशाहेन तु पाकः स्यात् पीयते तत्र योगिनी।
12. ङ, हेतुका।

द्विगुणं मकरन्दस्य[1] वारि संयोजयेद् घटे ।
द्वादशाहेन पाकः स्याच्छेषमन्यत् पुरोक्तवत् ।
एषा माध्वी समुद्दिष्टा देवताप्रीतिकारिणी ॥ २१ ॥
एका शुण्ठी द्विवह्निश्च मरीचत्रितयं[2] तथा ।
धातकी च चतुष्कं स्यात् पञ्च पुष्पाणि षण्मधु[3] ॥ २२ ॥
अशीतिगुडसम्मिश्रं शेषमन्यत् पुरोक्तवत् ।
इदं मनोहरं द्रव्यं योगिनीपानमुत्तमम् ॥ २३ ॥
सार्द्धेन्दुपलकं दध्नो[4] माहिषं प्रस्थमात्रकम्[5] ।
मोचापक्वशतञ्चापि योगोऽयं मदिरा शुभा[6] ॥ २४ ॥
तं मेळयित्वा संयोज्य[7] सान्द्रे[8] वंशपुटे पचेत् ।
चत्वारिंशद्दिनान्यष्टौ पङ्के पङ्कजसम्भवे[9] ॥ २५ ॥
नि[10]धायोद्धृत्य किरणैः सौरैः सम्यग् विशोषयेत्[11] ।
यदा च कठिनीभावस्तदा संगृह्य मानवः[12] ॥ २६ ॥
गुञ्जाफलप्रमाणन्तु जलैः सम्मिलितं शुभम् ।
आत्मेच्छं[13] पूरयेत् पात्रं परमानन्ददं[14] परम् ॥ २७ ॥
एतदप्युत्तमं द्रव्यं सर्वदेवप्रियं प्रिये ।
एतानि[15] मदहेतूनि मद्यान्यन्यानि कारयेत् ॥ २८ ॥
पानसं द्राक्षमाधूकं[16] खार्जूरं तालमैक्षवम् ।
मधूत्थं शीधु[17] माध्वीकं मैरेयं[18] नारिकेलजम् ॥ २९ ॥

---

1. ङ, मकरन्दः स्यात् ।
2. ङ, मरीचद्वितयं ।
3. ङ, पुष्पाणि षण्मधुत्रयम् ।
4. क, ङ, सार्द्धेन्दुपलको दध्ना ।
5. ख, प्रस्थकाष्टकम् ।
6. ङ, मदिरा स्मृता ।
7. ख, संमृज्य ।
8. ङ, सार्द्धं ।
9. ख, सङ्कुले ।
10. ङ, वि ।
11. ङ, सर्वाणि शोषयेत् ।
12. ख, साधकः ; ङ, मानतः ।
13. ग, ङ, आत्मस्थं ।
14. ङ, मकरन्दरसैः ।
15. ख, इत्यादि ।
16. ग, ङ, माध्वीकं ।
17. ङ, मधूच्छिष्टन्तु ।
18. ख, वासन्ती ।

मद्यान्येकादशैतानि भुक्तिमुक्तिकराणि च ।
द्वादशन्तु सुरा मद्यं सर्वेषामुत्तमं प्रिये ॥ ३० ॥
पैष्टी गौडी च माध्वी च विज्ञेया त्रिविधा सुरा ।
सर्वसिद्धिकरी पैष्टी गौडी भोगप्रदायिनी ॥ ३१ ॥
माध्वी मुक्तिकरी ज्ञेया सुरा स्याद्देवताप्रिया[1] ।
विद्याप्रदैक्षवी ज्ञेया[2] द्राक्षी राज्यप्रदा भवेत् ॥ ३२ ॥
तालजा स्तम्भने शस्ता खार्जूरी रिपुनाशिनी ।
नारिकेलभवा श्रीदा पानसी च शुभप्रदा ॥ ३३ ॥
मधूकजा ज्ञानकरी माध्वीकी रोगनाशिनी[3] ।
मैरेयाख्या कुलेशानि सर्वदा[4]पापहारिणी ॥ ३४ ॥
क्षीरवृक्षसमुद्भूतं मद्यं वल्कलसम्भवम् ।
मधुपुष्पसमुद्भूतम् आसवं तण्डुलोद्भवम् ॥ ३५ ॥
यस्यानन्दो निर्विकार आमोदश्च मनोहर:[5]* ।
मद्यं तदुत्तमं[6] देवि देवानां प्रीतिदायकम् † ॥ ३६ ॥
आत्मेच्छं[7] पूरयेत् पात्रं परमानन्दवर्द्धनम्[8] ।
एतदामोदकं द्रव्यं सर्वदेवप्रियं प्रिये ॥ ३७ ॥
सुरादर्शनमात्रेण सर्वपापैः प्रमुच्यते ।
तद्गन्धाघ्राणमात्रेण[9] शतक्रतुफलं लभेत् ॥ ३८ ॥
मद्यस्पर्शन[10]मात्रेण तीर्थकोटिफलं लभेत् ।
देवि तत्पानतः साक्षाल्लभेन्मुक्तिं चतुर्विधाम् ॥ ३९ ॥

---

* इत आरभ्य सार्द्धश्लोकद्वयं क पुस्तके न दृश्यते ।

† इतः परं "एतानि सुधाहेतूनि मद्यान्यन्यानि कारयेत्" इति श्लोकार्द्धं ग घ पुस्तकयोर्दृश्यते ।

1. ङ, सुराख्या देवता प्रिये । 2. ख, हाला ।
3. ङ, मधुजाख्या ज्ञानकरी दारिद्र्यरिपुनाशिनी ।
4. ख, सर्व्वपा । 5. ख, यत्सानन्दरुचिकर ; ङ, समानि च ।
6. ग, घ, अमृतं तद्द्वयं । 7. ङ, आत्मस्थं ।
8. ङ, परमानन्दवान्नरः । 9. घ, तद्द्रव्याघ्राणमात्रेण ।
10. क, ग, घ, तस्य सम्पर्क ; ङ, तस्य सन्दर्श ।

इच्छाशक्तिः सुरामोदे ज्ञानशक्तिश्च तद्रसे[1] ।
तत्स्वादे च क्रियाशक्तिस्तदुल्लासे परा स्थिता[2] ॥ ४० ॥
मदिरा ब्रह्मगाः प्रोक्ताः चित्तशोधनसाधनाः[3] ।
तासामेकां समाहृत्य[4] पूजाकर्म समाचरेत् ॥ ४१ ॥
मत्स्य[5]मांसादिविजयां चाष्टगन्धैः सुमिश्रिताम् ।
संमर्द्य वटिकां कृत्वा संगृह्याथ विचक्षणः ।
मद्याभावे तु वटिकां जले संयुज्य तर्पयेत् ॥ ४२ ॥
गुडमिश्रेण तक्रेण तर्पयेत्[6] मधुभाजिना ।
सौवीरेणाथवा कुर्यादेतत्[7] कर्म न लोपयेत् ॥
प्रमादाद् यदि लुप्येत देवताशापमाप्नुयात् ॥ ४३ ॥
मांसन्तु त्रिविधं प्रोक्तं खभूजलचरं प्रिये ।
यथासम्भवमप्येकं तर्पणार्थं प्रकल्पयेत् ।
मांसदर्शनमात्रेण सुरादर्शनवत् फलम् ॥ ४४ ॥
पितृदैवतयज्ञेषु वैधहिंसा विधीयते[8] ।
आत्मार्थं प्राणिनां हिंसा कदाचिन्नोदिता प्रिये ॥ ४५ ॥
अनिमित्तं[9] तृणं वापि छेदयेन्न कदाचन ।
देवतार्थं द्विजार्थं वा[10] हत्वा पापैर्न लिप्यते ॥ ४६ ॥
मामनादृत्य यत् पुण्यं पापं स्यात् प्रतिभाषतः[11] ।
मन्निमित्तं चरेत् पापं[12] पुण्यं भवति शाम्भवि ॥ ४७ ॥
यैरेव पतनं द्रव्यैः सिद्धिस्तैरेव चोदिता ।
श्रीकौलदर्शने चापि भैरवेण महात्मना ॥ ४८ ॥

---

1. ङ, तद्रवे ।    2. ङ, परास्थितिः ।

3. क, मदिरावृक्षमारुह्य रेतःशोधनसाधना ; ख, चेतःशोधनसाधना ; ङ, चित्तशोधनसाधनी ।

4. ङ, समुद्वृत्य ।  5. ङ, मद्य ।  6. घ, मर्द्दयेत् ; ङ, तेन वा ।

7. ख, दैव ।  8. ख, वेदे हिंसा ; ङ, देवि हिंसा विभाविता ।

9. ङ, स्वनिमित्तं ।  10. ख, ङ, द्विजं गां वा ।

11. क, ग, घ, ङ, पुण्येऽपि पापं स्यात् प्रत्यवायतः ।

12. क, ग, घ, मन्त्रिमन्त्रकृतं पापं ।

मत्कर्म[1] कुर्वतां पुंसां कर्मलोपो भवेन्नहि (यदि)।
तत्कर्म ते प्रकुर्वन्ति सप्तकोटिमुनीश्वराः ॥ ४९ ॥
हन्यान्मन्त्रेण चानेन त्वभिमन्त्र्य पशुं प्रिये।
गन्धपुष्पाक्षतैः पूज्य चान्यथा नरकं व्रजेत्[2] ॥ ५० ॥
शिवोत्कृत्तमिदं पिण्डमतस्त्वं शिवतां गतः[3]।
तद् बुध्यस्व[4] पशो त्वं हि मा शिवस्त्वं शिवोऽसि हि ॥ ५१ ॥
ब्रह्मा स्यात् पलले[5] विष्णुर्गन्धे रुद्रश्च तद्रसे[6]।
परमात्मा तदानन्दे तस्मात् सेव्यमिदं प्रिये ॥ ५२ ॥
मांसाभावे तु लशुनं सार्द्रकं नागरन्तु वा[7]।
आदाय पूजयेद्देवि चान्यथा[8] निष्फलं भवेत् ॥ ५३ ॥
मत्स्यमांसविहीनेन मद्येनापि न[9] तर्पयेत्।
न कुर्यान्मत्स्यमांसाभ्यां[10] विना द्रव्येण पूजनम् ॥ ५४ ॥
पिशितं तिलमात्रन्तु तिलार्द्धमपि बिन्दुना।
सकृत्तर्पणमात्रेण कोटियज्ञफलं[11] लभेत् ॥ ५५ ॥
कुलपूजासमं नास्ति पुण्यमन्यज्जगत्त्रये।
तस्माद् यः पूजयेद्भक्त्या भुक्तिमुक्त्योः स भाजनम् ॥ ५६ ॥
अनधीतोऽप्यशास्त्रज्ञो[12]गुरुभक्तो दृढव्रतः।
कुलपूजारतो यस्तु स मे प्रियतमो भवेत् ॥ ५७ ॥
चतुर्णामपि वर्णानामाश्रमाणामपीश्वरि।
पुंस्त्रीनपुंसकानान्तु पूजितेष्टफलप्रदा[13] ॥ ५८ ॥

---

1. ङ, यत्कर्म्म। 2. क, निष्फलं भवेत्।
3. ख, मतस्तु सेव्यतां गणैः; ग, ङ, अतस्तां शिवतां व्रजेत्
4. ङ, तद् बुध्वाशु। 5. क, ग, घ, ङ, सलिले।
6. क, तद्रुचौ। 7. ङ, नागपल्लवम्।
8. क, ग, घ, नान्यथा; ङ, देवीमन्यथा। 9. क, ग, च।
10. ख, मत्स्यमांसानां; ङ, न कुर्यान्मद्यसामान्यं।
11. ङ, सर्वयज्ञफलं। 12. क, ग, घ, अनधीतश्च शास्त्रज्ञः।
13. क, ग, पूजिता त्वं सदाशिवे; ख, पूजितेष्टं ददाति हि; घ, पूजितात्वं सदा शिवः।

इहामुत्र फलं[1] दद्याः[2] पूजिता सुवधूरिव ।
अपूजिता त्वं देवेशि दुःखदा कुवधूरिव ॥ ५९ ॥
कुलपूजां विना यस्तु[3] करोत्येवं सुदुर्मतिः ।
स याति नरकं घोरमेकविंशतिभिः कुलैः[4] ॥ ६० ॥
तस्मात् सर्वप्रयत्नेन कुलपूजारतो भवेत् ।
लभते सर्वसिद्धीश्च नात्र कार्या विचारणा ॥ ६१ ॥
आराधनासमर्थश्चेद्दद्यादर्चनसाधनम् ।
यो दातुं नैव शक्नोति कुर्यादर्चनदर्शनम्[5] ॥ ६२ ॥
सम्यक् शतक्रतून् कृत्वा यत् फलं समवाप्नुयात् ।
तत् फलं समवाप्नोति सकृत् कृत्वा क्रमार्चनम्[6] ॥ ६३ ॥
महाषोडश दानानि कृत्वा यच्च फलं लभेत्[7] ।
तत् फलं समवाप्नोति कृत्वा श्रीचक्रदर्शनम् ॥ ६४ ॥
सार्द्धत्रिकोटितीर्थेषु स्नात्वा यत् फलमाप्नुयात् ।
तत् फलं लभते देवि सकृत् कृत्वा क्रमार्चनम्[8] ॥ ६५ ॥
बहुनोक्तेन किं देवि यथाभक्त्या[9] ददाति यः ।
कुलाचार्याय पूजार्थं कुलद्रव्यं स धर्मवित्[10] ॥ ६६ ॥
शैवे वा वैष्णवे शाक्ते सौरे सुगतदर्शने[11] ।
बौद्धे[12] पाशुपते सांख्ये व्रते कुलमुखे तथा[13] ॥ ६७ ॥
सदक्ष[14]वामसिद्धान्ते वैदिकादिषु पार्वति ।
विनाऽलिपिशिताभ्यान्तु[15] पूजनं निष्फलं भवेत् ॥ ६८ ॥

---

1. ङ, शुभं । 2. क, ग, घ, ङ, दद्यात् ।
3. ख, कुलपूजान्तरायान्तु । 4. ङ, सह ।
5. ङ, साधनम् । 6. ङ, कुलार्चनम् ।
7. ङ, कृत्वा षोडश दानानि यत् फलं लभते प्रिये ।
8. ङ, भक्त्या कृत्वा श्रीचक्रदर्शनम् । 9. ख, शक्त्या ।
10. ख, मन्त्रवित् । 11. ङ, शौरेषु शतदर्शने । 12. क, रौद्रे ।
13. ख, साम्बे मन्त्रे कालासुखे तथा; घ, कुलासुखे तथा; ङ, तथा व्रतमुखेऽपि वा ।
14. ङ, दक्षिणे । 15. ङ, विना नीलसिताभ्यान्तु ।

कुलद्रव्यैर्विना कुर्याज्जपयज्ञ[1]तपोव्रतम् ।
निष्फलं तद्भवेद्देवि भस्मनीव यथा हुतम् ॥ ६९ ॥
यथैवान्तश्चरा[2] राज्ञः प्रियाः स्युर्न बहिश्चराः ।
तथान्तर्यागनिष्ठा[3] ये ते प्रिया देवि नापरे[4] ॥ ७० ॥
समर्पयन्ति ये भक्त्या आवाभ्यां[5] पिशितासवम् ।
उत्पादयन्ति चानन्दं मत्प्रियाः कौलिकाश्च ते[6] ॥ ७१ ॥
आवयोः परमाकारं सच्चिदानन्दलक्षणम्[7] ।
कुलद्रव्योपभोगेन परि[8]स्फुरति नान्यथा ॥ ७२ ॥
अन्तःस्थानुभवोल्लासो मनोवाचामगोचरः ।
कुलद्रव्योपभोगेन[9] जायते नान्यथा प्रिये ॥ ७३ ॥
सेविते च कुलद्रव्ये कुलतत्त्वार्थदर्शनः[10] ।
जायते भैरवावेशः सर्वत्र समदर्शनः[11] ॥ ७४ ॥
तमःपरिवृतं वेश्म यथा दीपेन दृश्यते ।
तथा मायावृतो ह्यात्मा द्रव्यपानेन[12] दृश्यते ॥ ७५ ॥
मन्त्रपूतं कुलद्रव्यं गुरुदेवार्पितं प्रिये ।
ये पिबन्ति जनास्तेषां स्तन्य[13]पानं न विद्यते ॥ ७६ ॥
मद्यन्तु भैरवो देवो मद्यं शक्तिः समीरिता ।
अहो भोक्ता च मद्यस्य[14] मोहयेदमरानपि ॥ ७७ ॥

---

1. ख, धूपपूजातपोव्रतं ; ङ, जपपूजातपोव्रतं ।
2. क, ग, घ, यथैवानुचरा ।
3. ङ, तेनान्तर्यागनिष्ठाः ।
4. ख, ङ, प्रिया मे देवि नापरे ।
5. क, ग, घ, कराभ्यां ।
6. ग, घ, ङ, ये ।
7. ख, विग्रहं ।
8. ख, मतिः ।
9. ङ, कुलद्रव्योपभुक्तेन ।
10. ख, वादिनः ।
11. क, ख, दर्शिनः ।
12. क, ख, घ, दिव्यपानेन ; ङ, ज्ञानदीपेन ।
13. ङ, जलं तेषां स्तन ।
14. क, अहो भुक्तं हि मद्यं हि ; ख, अग्रभुक्तञ्च मद्यञ्च ; ग, अहो भुक्तं तदुभयं ; घ, अहो भुक्तं तदधिकं ।

तन्मैरेयं नरः पीत्वा यो न विकुरुते प्रिये[1] ।
मद्ध्यानैकपरो[2] भूत्वा स मुक्तः स च कौलिकः ॥ ७८ ॥
सुरा शक्तिः शिवो[3] मांसं तद्भोक्ता[4] भैरवः स्वयम् ।
तयोरैक्यसमुत्पन्न आनन्दो मोक्ष उच्यते[5] ॥ ७९ ॥
आनन्दं ब्रह्मणो रूपं तच्च देहे व्यवस्थितम्[6] ।
तस्याभिव्यञ्जकं मद्यं योगिभिस्तेन पीयते ॥ ८० ॥
कुण्डी[7]कम्बुकपालानि मधुपूर्णानि बिभ्रतः ।
किं न पश्यति लोकोऽयं ब्रह्मविष्णुमहेश्वरान् ॥ ८१ ॥
निःशङ्को निर्भयो वीरो निर्लज्जो[8] निष्कुतूहलः ।
निर्णीतवेदशास्त्रार्थो वरदां वारुणीं पिबेत् ॥ ८२ ॥
मन्त्रसंस्कारसंशुद्धामृतपानेन पार्वति ।
जायते देवताभावो भवबन्धविमोचकः[9] ॥ ८३ ॥
ब्राह्मणस्य सदा पेयं क्षत्रियस्य रणागमे[10] ।
गोलम्भने तु वैश्यस्य शूद्रस्यान्त्येष्टिकर्मणि[11] ॥ ८४ ॥
देवान् पितॄन् समभ्यर्च्य देवि शास्त्रोक्तवर्त्मना ।
गुरुं स्मरन् पिबन्मद्यं खादन् मांसं न दोषभाक् ॥ ८५ ॥
तृप्त्यर्थं पितृदेवानां[12] ब्रह्मध्यानस्थिराय च[13] ।
सेवेत मधुमांसानि तृष्णया चेत् स पातकी ॥ ८६ ॥

---

1. के, ग, घ, शिवं पीत्वा योगादाश्रयते नरः ; ङ, शिवं पीत्वा यो वा विकुरुते नरः ।

2. क, ग, घ, सद्योऽनेकपरो । 3. ङ, शिरो । 4. क, तद्भक्तो ।

5. क, ङ, तयोरैक्यं समुत्पन्नमानन्दो मोक्षमुच्यते ।

6. घ, तत्तद्देहेष्ववस्थितम् ; ख, तच्च देहे प्रतिष्ठितम् ; ग, तत्तद्देहे व्यवस्थितम् ।

7. ख, ग, कण्ठ ; ङ, कुम्भ । 8. क, ख, ग, घ, धीरो निर्द्वन्द्वो ।

9. ख, महापातकनाशनः । 10. क, वरानने ।

11. ङ, गवामालम्भने वैश्यशूद्रस्यालोष्टकर्मणि ।

12. क, ग, घ, ङ, सर्वदेवानां ।

13. ङ, ब्रह्मज्ञानं विधाय च ।

मन्त्रार्थस्फुरणार्थाय[1] मनसः स्थैर्यहेतवे ।
भवपाशनिवृत्त्यर्थं मधुपानं[2] समाचरेत् ॥ ८७ ॥
सेवेत स्वसुखार्थं यो मद्यादीनि स पातकी ।
प्राशयेद्देवताप्रीत्यै[3] स्वाभिलाषविवर्जितः ॥ ८८ ॥
मत्स्यमांससुरादीनां मादकानां निषेवणम् ।
यागकालं विनान्यत्र दूषणं[4] कथितं प्रिये ॥ ८९ ॥
यथा क्रतुषु विप्राणां सोमपानं विधीयते[5] ।
मद्यपानं तथा कार्यं समये[6] भोगमोक्षदम् ॥ ९० ॥
श्रीगुरोः कुलशास्त्रेभ्यः सम्यग्विज्ञाय वासनाम् ।
पञ्चमुद्रा निषेवेत चान्यथा पतितो भवेद् ॥ ९१ ॥
आवृतिं गुरुपंक्तिञ्च वटुकादीन्न पूज्य यः[7] ।
वीरोऽप्यत्र वृथा पानी[8] देवताशापमाप्नुयात् ॥ ९२ ॥
अयष्ट्वा भैरवं देवमकृत्वा मन्त्रतर्पणम् ।
पशुपानविधौ पीत्वा वीरोऽपि नरकं व्रजेत् ॥ ९३ ॥
अज्ञात्वा कौलिकाचारमयष्ट्वा गुरुपादुकाम् ।
योऽस्मिन् शास्त्रे[9] प्रवर्त्तेत तं त्वं पीडयसि ध्रुवम् ॥ ९४ ॥
कौलज्ञाने ह्यसिद्धो यस्तद्द्रव्यं भोक्तुमिच्छति ।
स महापातकी ज्ञेयः सर्वधर्म[10]बहिष्कृतः ॥ ९५ ॥
समयाचारहीनस्य स्वैरवृत्तेर्दुरात्मनः[11] ।
न सिद्ध्यः कुलभ्रंशस्तत्संसर्गं न कारयेत्[12] ॥ ९६ ॥

---

1. ङ, मन्त्रार्थस्मरणञ्चैव ।
2. ख, अलिपानं; ङ, ज्ञानपानं ।
3. ङ, प्रीत्या ।
4. ख, न मया ।
5. ख, यथा कदुष्णविप्राणां सोमपानं न दूषितं ।
6. ङ, समग्र ।
7. ख, ग, घ, कादीन् प्रपूज्य च ।
8. ङ, पानं ।
9. ङ, तन्त्रे ।
10. क, सर्वकर्म ।
11. ङ, द्वैधवृत्तित्त्वमानिनः ।
12. ङ, न सिध्येन्मत्कृतं सर्वं तत्तस्य नरकायते ।

य: शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः[1] ।
स सिद्धिमिह नाप्नोति परत्र न परां[2] गतिम् ॥ ९७ ॥
स्वेच्छया रममाणो[3] यो दीक्षासंस्कारवर्जितः[4] ।
न तस्य सद्‌गतिः कापि तपस्तीर्थव्रतादिभिः ॥ ९८ ॥
असंस्कृतं पिबेद्द्रव्यं[5] बलात्कारेण मैथुनम् ।
स्वप्रियेण[6] हतं मांसं रौरवं नरकं व्रजेत् ॥ ९९ ॥
कौलाः पशुव्रतस्थाश्चेत्[7] पक्षद्वयविडम्बकाः ।
केशसंख्या स्मृता यावत्तावत्तिष्ठन्ति रौरवे ॥ १०० ॥
कुलद्रव्याणि सेवेत योऽन्यदर्शनमाश्रितः ।
तदङ्गरोमसंख्यातं भूतयोनिषु जायते ॥ १०१ ॥
मदप्रच्छादितात्मा च[8] न किञ्चिदपि वेत्ति च ।
न ध्यानं[9] न तपो नार्चा न धर्मो न च सत्क्रिया ॥ १०२ ॥
न दैवं न गुरुर्नात्मविचारो[10] न स कौलिकः ।
केवलं विषयासक्तः पतत्येव न संशयः ॥ १०३ ॥
मद्यासक्तो न पूजार्थी[11] मांसाशी स्त्रीनिषेवकः ।
कौलोपदेशहीनो यः सोऽक्षयं[12] नरकं व्रजेत् ॥ १०४ ॥
असंस्कारी तु यो नो स्यात् पञ्च मुद्रा निषेवते ।
कुलेशि ब्रह्मनिष्ठोऽपि[13] निन्द्यतामधिगच्छति ॥ १०५ ॥
लिङ्गत्रयविशेषज्ञः षडाधारविभेदकः[14] ।
पीठस्थानानि चागत्य महापद्मवनं व्रजेत् ॥ १०६ ॥

---

1. ङ, कामचारतः । 2. ङ, नरके ।
3. क, ख, वर्त्तमानः । 4. ख, दीक्षाशिक्षाविवर्जितः ।
5. ग, घ, पिबेत्तीर्थं । 6. ङ, अप्रियेण ।
7. क, पशुव्रताश्चैव ; ङ, पाशुपताश्चैव ।
8. क, ग, घ, मदङ्गछेदिनात्मानं । 9. क, ग, घ, कालं ।
10. ख, न दैवं न गुरुर्नात्मा निराचारो ; ङ, न मन्त्रदेवगुर्वात्मा ।
11. ख, प्रमत्तश्च । 12. क, सोऽन्धकं ।
13. क, ग, घ, ब्रह्महा स स्यात् ।
14. क, ग, घ, षडाधाराणि भेदतः ।

आमूलाधारमाब्रह्मरन्ध्रं गत्वा पुनः पुनः ।
चिच्चन्द्रकुण्डलीशक्तिसामरस्य[1] सुखोदयः ॥ १०७ ॥
व्योमपङ्कजनिस्यन्दसुधापानरतो नरः[2] ।
सुधापानमिदं प्रोक्तमितरे[3] मद्यपायिनः ॥ १०८ ॥
पुण्यापुण्यपशुं हत्वा ज्ञानखड्गेन योगवित् ।
परे लयं[4] नयेच्चित्तं पलाशी स निगद्यते ॥ १०९ ॥
मनसा चेन्द्रियगणं संयम्यात्मनि योजयेत्[5] ।
मत्स्याशी स भवेद्देवि शेषाः स्युः प्राणिहिंसकाः ॥ ११० ॥
अप्रबुद्धा पशोः शक्तिः[6] प्रबद्धा कौलिकस्य च ।
शक्ति तां सेवयेत्[7] यस्तु स भवेत् शक्तिसेवकः ॥ १११ ॥
पराशक्त्यात्म[8]मिथुनसंयोगानन्दनिर्भरः ।
य आस्ते मैथुनं तत् स्यादपरे स्त्रीनिषेवकाः ॥ ११२ ॥
इत्यादि पञ्चमुद्राणां वासनां[9] कुलनायिके ।
ज्ञात्वा गुरुमुखाद्देवि यः सेवेत स[10] मुच्यते ॥ ११३ ॥
इति ते कथितं देवि कुलद्रव्यादिलक्षणम् ।
समासेन कुलेशानि किं भूयः श्रोतुमिच्छसि ॥ ११४ ॥

इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये
सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चम-
खण्डे ऊर्ध्वाम्नायतन्त्रे कुलमाहात्म्य-
कथनं नाम पञ्चम उल्लासः* ।

---

1. ङ, शक्तिः सामवस्य ।
2. क, सुधापानं ततो भवेत् ।
3. ङ, मधुपायी समं प्रोक्तस्त्वितरे ।
4. ग, परेऽनघं ; ङ, परे शिवे ।
5. क, घ, सलक्षादिन्द्रियगणं सम्पाद्यात्मनि योजयेत् ; ङ, योगवित् ।
6. ङ, अप्रबुद्धा पशूक्तो हि ।
7. ङ, शक्तीनां सेवको ।
8. ख, घ, पराशक्त्या स्व ।
9. ग, वासश्च ।
10. ङ, यः स्मरेत् स तु ।

# षष्ठ उल्लासः।



श्रीदेव्युवाच।

कुलेश श्रोतुमिच्छामि पूजकस्य[1] च लक्षणम्।
कुलद्रव्यादिसंस्कारमर्चनं[2] वद मे प्रभो ॥ १ ॥

ईश्वर उवाच।

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि।
तस्य श्रवणमात्रेण स्तूयते[3] देवदानवैः ॥ २ ॥
निरस्तपातका यत्र मानवाः पुण्यकर्मिणः।
कुलज्ञानसुसम्पन्ना भजन्ते ये[4] दृढव्रताः ॥ ३ ॥
पूर्णाभिषेकसहितो[5] वेदशास्त्रार्थतत्त्ववित्।
देवतागुरुभक्तस्तु नियतात्मार्चयेत्[6] प्रिये ॥ ४ ॥
कुला[7]गमरहस्यज्ञो देवताराधनोत्सुकः।
गुरूपदेशसंयुक्तः पूजयेत् कुलनायिके ॥ ५ ॥
शुद्धात्मा चातिसंहृष्टः क्रोधलौल्य[8]विवर्जितः।
पशुव्रतादिविमुखः सुमुखस्तु यजेत्[9] प्रिये ॥ ६ ॥
यदा पुंसः कृतार्थस्य कालेन बहुना प्रिये।
मत्प्रसादेन भूयाच्च दृढभक्ति[10]समागमः ॥ ७ ॥

---

1. ङ, पूजनस्य।
2. क, ग, घ, कुलद्रव्यादियजनं संस्कारं।
3. ङ, स्तूयसे।
4. ख, त्वां।
5. क, ग, घ, पूजाभिषेकविहितो।
6. ख, नियतं योऽर्चयेत्।
7. ख, कल्पा।
8. ख, कार्य।
9. क, सन्मुखस्तर्पयेत्।
10. ख, च्चेदिन्दुशक्ति ; ङ, द्रव्यशक्ति।

तदर्थं[1] तर्पणं कुर्याद् द्रव्यैः श्रीभैरवोदितैः ।
गुरूपदेशविधिना चान्यथा पतनं भवेत् ॥ ८ ॥
मन्त्रयोगेन देवेशि कुर्यात् श्रीचक्रपूजनम् ।
तदहन्तु त्वया सार्धं गृह्णामि स्वयमादरात् ॥ ९ ॥
भैरवोऽहमिति ज्ञानात्[2] सर्वज्ञादिगुणान्वितः ।
इति संचिन्त्य योगीन्द्रः कुलपूजारतो भवेत्[3] ॥ १० ॥
इत्यादिलक्षणोपेतः कौलिको नियतव्रतः ।
यस्त्वां समर्चयेद्देवि भुक्तिमुक्त्योः[4] स भाजनम् ॥ ११ ॥
एकान्ते विजनेऽरण्ये देशे बाधाविवर्जिते ।
सुखासने[5] समासीनः प्राङ्मुखो वाप्युदङ्मुखः ॥ १२ ॥
अमृताब्धौ[6] मणिद्वीपे कल्पवृक्षतरोस्तले[7] ।
रत्न[8]प्राकारसन्दीप्तं स्मरेन्माणिक्यमण्डपम् ॥ १३ ॥
पुष्पमालावितानाढ्यं प्रच्छन्नपट[9]संवृतम् ।
कर्पूरदीप[10]भास्वन्तं धूपामोदसुगन्धिकम् ॥ १४ ॥
तन्मण्डपस्थमात्मानं[11] ध्यात्वाऽनाकुलचेतसा ।
श्रीगुरोराज्ञया देवि कुलपूजां समाचरेत् ॥ १५ ॥
आत्मस्थानमनुद्रव्यदेव[12]शुद्धिस्तु पञ्चमी ।
यावन्न कुरुते मन्त्री तावद्देवार्चनं कुतः ॥ १६ ॥
सुस्नानभूतसंशुद्धिप्राणायामादिभिः[13] प्रिये ।
षडङ्गाद्यखिलन्यासैरात्मशुद्धिः समीरिता ॥ १७ ॥

1. ख, तदूर्द्ध्वं; ङ, तदर्द्धं ।
2. क, ख, ज्ञात्वा ।
3. ख, ङ, कुलपूजां समारभेत् ।
4. क, ङ, भक्तिमुक्त्योः ।
5. ङ, सूक्ष्मासने ।
6. क, घ, अमृताख्य; ङ, अमृतार्ण ।
7. ख, ग, घ, वनोज्ज्वले ।
8. ख, वस्त्र; क, ङ, वज्र ।
9. ख, पद ।
10. क, कर्पूरदीप्तं भा ।
11. ङ, तन्मण्डपं सुधात्मानं ।
12. ङ, देह ।
13. क, सम्यक् सम्भूतशुद्धिञ्च प्राणायामादिकं ।

सम्मार्जनानुलेपाद्यैर्दर्पणोदरवत्कृतम् ।
वितानधूपदीपादिपुष्पमालोपशोभितम् ।
पञ्चवर्णरजश्चित्रं स्थानशुद्धिरितीरिता ॥ १८ ॥
ग्रथित्वा मातृकावर्णैर्मूलमन्त्राक्षराणि च ।
क्रमोत्क्रमाद् द्विरावृत्त्या[1] मन्त्रशुद्धिरितीरिता ॥ १९ ॥
पूजाद्रव्याणि संप्रोक्ष्य[2] मूलास्त्राद्भि[3]र्विधानवित् ।
दर्शयेद्धेनुमुद्राञ्च द्रव्यशुद्धिरितीरिता ॥ २० ॥
पीठे देवं प्रतिष्ठाप्य सकलीकृत्य मन्त्रवित्[4] ।
मूलमन्त्रेण दीप्तात्मा न्यासद्रव्योदकेन च[5] ।
त्रिवारं प्रोक्षयेद्विद्वान् देव[6]शुद्धिरितीरिता ॥ २१ ॥
पञ्चशुद्धिं विधायेत्थं पश्चाद् यजनमाचरेत् ।
सा पूजा सफला प्रोक्ता चान्यथा निष्फला भवेत् ॥ २२ ॥
मण्डलेन विना पूजा निष्फला कथिता प्रिये ।
तस्मान्मण्डलमालिख्य विधिवत्तत्र पूजयेत् ॥ २३ ॥
अखण्डमण्डलाकारं विश्वं व्याप्य व्यवस्थितम्[7] ।
त्रैलोक्यं मण्डितं येन मण्डलं तत् सदा शिवम् ॥ २४ ॥
उड्डीयानं चतुरस्रं[8] कामरूपञ्च वर्त्तुलम् ।
जालन्धरञ्च चन्द्रार्धं[9] त्र्यस्रः पूर्णगिरिर्भवेत् ॥ २५ ॥
अभ्यर्च्य मण्डलं पश्चादाधारान् स्थापयेत् क्रमात् ।
सामान्यश्रीगुरुभोगबलिपात्राणि पञ्चधा[10] ॥ २६ ॥

---

1. ख, क्रमोक्तमातृकावृत्तिः ।
2. ङ, पूजाद्रव्यासनं प्रोक्ष्य ।
3. ख, मुद्रास्त्रादि ; ङ, मूलेनैव ।
4. ङ, सकलीकृतविग्रहः ।
5. क, दीपादीन्न्यस्यादीनुदकेन च ; ख, दीपिन्यां बालायार्घ्योदकेन च ; ग, घ, दीपादीन्माल्यादीनुदकेन च ।
6. ङ, देह ।
7. ङ, चराचरं ।
8. ङ, उद्यानं चतुरस्रं स्यात् ।
9. ख, जालभ्रमर्द्धचन्द्राभं ।
10. ख, ङ, शङ्खमर्घ्यं भोगपूजाबलिपात्रञ्च पञ्चधा ।

द्विपात्रं वा त्रिपात्रं वा एकपात्रं न कारयेत्* ।
स्वदक्षिणादिवामान्तं स्थाप्याभ्यर्च्यासवेन तु[1] ॥ २७ ॥
संपूर्य[2] मूलमन्त्रेण कुलेश्वरि विधानवित् ।
तत्र माषप्रमाणन्तु मत्स्यं मांसं विनिक्षिपेत् ॥ २८ ॥
नष्टैः पर्युषितोच्छिष्टै[3]र्दुर्गन्धैर्गन्धवर्जितैः ।
हेतुभिः पर[4]पात्रस्थैस्तर्पितं निष्फलं भवेत् ॥ २९ ॥
न पूरयेत्तु पात्राणि अप्रियैस्तैः कुलेश्वरि† ।
स्वादिष्ठैश्च मदिष्ठैश्च[5] द्रव्यैरमृतसन्निभैः ।
मनोहरैर्महेशानि तर्पणं सफलं भवेत् ॥ ३० ॥
असंस्कृता सुरा पापकलहव्याधिदुःखदा[6] ।
आयुःश्रीकीर्त्तिसौभाग्यधनधान्य[7]विनाशिनी ॥ ३१ ॥
तस्मात् संस्कृत्य विधिवत् कुलद्रव्यं ततोऽर्चयेत् ।
अन्यथा नरकं याति दाता भोक्ता न[8] संशयः ॥ ३२ ॥
विना द्रव्याधिवासेन[9] न जपेन्न स्मरेत् प्रिये ।
ये स्मरन्ति नरा मूढास्तेषां दुःखं पदे पदे ॥ ३३ ॥
नासवेन विना मन्त्रो न मन्त्रेण विनासवः ।
परस्परविरोधित्वात् कथं पूजा विधीयते ॥ ३४ ॥
तत्संशयनिवृत्तिञ्च[10] ज्ञात्वा गुरुमुखात् प्रिये ।
वीक्षणं प्रोक्षणं ध्यानं मन्त्रमुद्राविशोधनम् ।
द्रव्यं तर्पणयोग्यं स्याद्देवताप्रीतिकारकम्[11] ॥ ३५ ॥

---

* ख ङ पुस्तकयोः पद्यार्द्धमिदं न दृश्यते ।
† ख ङ पुस्तकयोः श्लोकार्द्धमिदं न दृश्यते ।
1. ङ, मूलपात्रन्तु संस्थाप्य अभ्यर्च्य चासनेन तु ।
2. ग, घ, ङ, संपूज्य ।
3. ङ, पर्युषितोद्दिष्टैः ।
4. ङ, सह ।
5. ङ, स्वाधिष्ठैश्च वाधिष्ठैश्च ।
6. ग, ङ, असंस्कृतसुरापानं कलहव्याधिदुःखदम् ।
7. ख, धर्मविद्या; ङ, कीर्त्तिरायुश्च सौख्यञ्च धर्मो विद्या च नश्यति ।
8. ङ, तद्भोक्ता नात्र ।
9. क, ङ, द्रव्याधिवासेन ।
10. क, तत्संशयनिमित्तञ्च ।
11. ख, अन्यथा नरकं व्रजेत् ।

अग्निसूर्येन्दुब्रह्मेन्द्रविष्णुरुद्रसदाशिवैः[1] ।
चतुर्विंशतिमन्त्रैः स्यान्मद्यञ्चैव परामृतम् ॥ ३६ ॥
अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ।
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ॥ ३७ ॥
पूर्णा पूर्णामृता चेति कथिताः कुलनायिके ।
सौम्याः कामप्रदायिन्यः षोडश स्वरजाः कलाः ॥ ३८ ॥
तपनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ।
सुषुम्ना भोगदा विश्वा रोधिनी[2] धारिणी क्षमा ।
कभाद्या वसुदाः सौराष्ठडान्ता द्वादशेरिताः[3] ॥ ३९ ॥
धूम्रार्चिरुष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी ।
सुश्रीः सुरूपा[4] कपिला हव्यकव्यवहे अपि ।
आग्नेया यादिवर्णाद्या[5] दश धर्मप्रदाः कलाः ॥ ४० ॥
सृष्टि[6]र्मेधा स्मृतिर्ऋद्धिः कान्तिर्लक्ष्मीर्द्युतिः स्थिरा ।
स्थितिः सिद्धिरिति प्रोक्ताः कचवर्गकला दश ।
अकारप्रभवा ब्रह्मजाताः स्युः सृष्टये कलाः[7] ॥ ४१ ॥
जरा च पालिनी[8] शान्तिरीश्वरी रतिकामिके ।
वरदाह्लादिनीप्रीतिर्दीर्घाः स्युष्टतवर्गजाः[9] ।
उकारप्रभवा विष्णुजाताः स्युः स्थितये कलाः ॥ ४२ ॥
तीक्ष्णा रौद्री भया निद्रा तन्द्रा क्षुत्[10] क्रोधिनी क्रिया[11] ।
उत्कारी मृत्युरित्युक्ता पयवर्गकला दश ।
मकारप्रभवा रुद्रजाताः संहृतये कलाः ॥ ४३ ॥

---

1. क, अग्निसूर्येन्दुसब्रह्मविष्णुरुद्रेशसच्छिवैः ।
2. ग, बोधिनी ।
3. ख, अनन्ता; ङ, कलाद्या वसुधाः सौराः प्रभा द्वादश ईडिताः ।
4. क, ग, ङ, स्वरूपा ।
5. ख, यादिवर्णोत्थिा ।
6. ङ, तुष्टि ।
7. ङ, अकारार्णसमुद्भूता ब्रह्मणस्तु कला इमाः ।
8. ग, ङ, जवा कपालिनी ।
9. ङ, तथा च दशमी स्मृता ।
10. ङ, क्षुत्तृष्णा ।
11. ङ, प्रिया ।

षवर्गगा[1]श्चतस्रः स्युः पीता श्वेतारुणासिताः* ।
कलाश्चेश्वरसञ्जातास्तिरोधानाय बिन्दुजाः[2] ॥ ४४ ॥
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ।
इन्धिका दीपिका चापि रेचिका[3] मोचिका परा ॥ ४५ ॥
सूक्ष्मा सूक्ष्मामृता ज्ञानाऽमृता चाप्यायिनी तथा ।
व्यापिनी व्योमरूपा च षोडश[4] स्वरजाः कलाः ।
सदाशिवभवा नादादनुग्रहकलाः क्रमात् ॥ ४६ ॥
प्रथमं प्रकृतेर्हंसः[5]प्रतद्विष्णुरनन्तरम् ।
त्र्यम्बकन्तु तृतीयं स्याच्चतुर्थस्तत्पदादिकः[6] ॥ ४७ ॥
विष्णुर्योनिं कल्पयतु पञ्चमः कल्पनामनुः ।
चतुर्नवतिमन्त्रात्मदेवताभावसिद्धिदाः[7] † ॥ ४८ ॥
मन्त्रजापश्च संप्रोक्त आत्मस्तवश्च पञ्चभिः ।
अत्र ये [ते] पञ्च संप्रोक्ता मन्त्रास्ते कुलनायिके ॥ ४९ ॥
अखण्डैकरसानन्दाकरे पर[8]सुधात्मनि ।
स्वच्छन्दस्फुरणामत्र निधेह्यकुलरूपिणि[9] ॥ ५० ॥
अकुलस्थामृताकारे[10] सिद्धिज्ञानकरे परे[11] ।
अमृतत्वं विधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि ॥ ५१ ॥

---

* ङ पुस्तके इतः परं "सवर्गगास्ततस्तिस्रः सुस्थिता तारिणी सिताः" इत्यधिकं श्लोकार्द्धं दृश्यते ।

† ख पुस्तके "कलाप्रभेदाश्च मिथो युज्यन्ते ताः पृथक् पृथक् । चतुर्नवति संप्रोक्ता चात्मस्तवेऽस्य पञ्चभिः" इत्यधिकं दृश्यते ।

1. ग, घ, ङ, शवर्गस्य । 2. ङ, स्थिरज्ञानाय बिन्दुगाः ।
3. ख, रेतिका । 4. ङ, बिन्द्वन्ताः ।
5. ङ, प्रथमन्तु कृते हंसः । 6. ङ, परादिकः ।
7. ङ, चतुर्थरतिमन्त्राः स्युर्द्देवताबाह्य पूजिताः; ख, देवताबाह्य पूज्यताम् ।
8. ख, नन्दे कुलेश्वरि, क पुस्तके "करे" इत्यत्र "परे" पाठो दृश्यते ।
9. ख, स्वच्छन्दस्फुरणार्थाय; ङ, स्वच्छन्दस्मरणे मन्त्राद्भवत्यमृतरूपिणी । 10. ख, गारे । 11. ङ, शुद्धज्ञानकरे वरे ।

तद्रूपेणैकरस्यञ्च कृत्वार्घ्यं तत्स्वरूपिणि[1] ।
भूत्वा परामृताकारं मयि चित्स्फुरणं कुरु[2] ॥ ५२ ॥
वाग्भवं पार्श्वगं[3] भूमिः पुष्टिरिन्दुसमन्विता[4] ।
स्थितिश्च पावकानुग्रहार्थेन्दुसमलङ्कृता[5] ॥ ५३ ॥
स्थिरेन्धिकेन्दुसंयुक्ता[6] श्वेता बिन्दुयुगान्विता ।
तथामृते पदं ब्रूयात्तत्पश्चादमृतोद्भवे ॥ ५४ ॥
तथामृतेश्वरीत्युक्त्वा पश्चादमृतवर्षिणि[7] ।
अमृतं स्रावयद् द्वन्द्वं द्विठान्तो द्रव्यशुद्धिकृत् ।
अमृतेशीमनुः प्रोक्तः पञ्चत्रिंशद्भिरक्षरैः[8] * ॥ ५५ ॥
वाग्भवं वदयुग्मञ्च वाग्वादिनीति वाग्भवम् ।
कामराजं ततः क्लिन्ने क्लेदिनि क्लेदयेति च ॥ ५६ ॥
महामोक्षं कुरुयुग्मं कामराजमतः परम् ।
तार्त्तीयं मोक्षशब्दान्ते कुरुयुग्मं वदेत्ततः ॥ ५७ ॥
स्यात् प्रासादपरा चान्ते[9]सप्तत्रिंशद्भिरक्षरैः ।
दीपनीमनुरित्युक्तः सर्वसिद्धिकरः प्रिये ॥ ५८ ॥
एताः कला मातृकाञ्चाप्यख[ण्डेन्द्वा]ण्डैकादिकान् मनून्[10] ।
अमृतेशीं दीपनीञ्च मूलमन्त्रमपि क्रमात् ॥ ५९ ॥

---

*ङ पुस्तके इतः परं "वाग्भवं वदयुग्मञ्च वाग्वादिनी ततः परम् । ऐँ क्लीँ सौं वमादीनि ऐँ क्लीँ ततः परम् । क्लिन्ने क्लेदय छेदय महामोक्षं कुरु कुरु क्लीँ नमः । मोक्षं कुरु कुरु हौँ ह्रीँ" इत्यधिका दृश्यन्ते ।

1. ङ, तद्रूपिण्येकरूपित्वं कृत्वा चैतत् स्वरूपिणि ।
2. ङ, विस्फुरणं कुरु ।
3. ख, ङ, पावनं ।
4. ङ, पुष्टिरिन्दुः समीरिता ।
5. ङ, पावकान्धश्च गत्वार्द्धेन्दुमलङ्कृता ।
6. ङ, स्थिरार्च्चिषेन्दुसंयुक्ता ।
7. ख, वासिनि; ङ, रूपिणि ।
8. क, ख, पञ्चविंशद्भि ।
9. क, मन्त्रः ।
10. ङ, प्यथकादिका मनूनपि ।

एकद्वित्रिचतुःपञ्च द्विचतुर्वार[1]मम्बिके ।
संस्मृत्याभ्यर्च्य[2] पात्रन्तु पूजयेद्धेनुमुद्रया ॥ ६० ॥
ब्रह्माण्डखण्डसम्भूतमशेषरससम्भृतम् ।
आपूरितं महापात्रं[3] पीयूषरसमावह[4] ॥ ६१ ॥
शुद्धद्रव्येण तेनापि गन्धपुष्पाक्षतै[5]रपि ।
न्यासोक्तसर्वमन्त्रैश्चाप्या[6]त्मानं पूजयेत् प्रिये ॥ ६२ ॥
मूर्द्धिन श्रीगुरुपङ्क्तीश्च मूलाधारे च पादुकाम् ।
दिव्यौघे चादिनाथश्च तच्छक्तिश्च सदाशिवः ॥ ६३ ॥
तत्पत्नी चेश्वरस्तस्य[7] भार्या रुद्रश्च तद्वधूः ।
विष्णुश्च तत्प्रिया ब्रह्मा तत्कान्ता द्वादशेरिताः[8] ॥ ६४ ॥
सिद्धौघे सनकश्चैव सनन्दश्च सनातनः ।
सनत्कुमारश्च सनत्सुजातश्च ऋभुक्षजः[6] ॥ ६५ ॥
दत्तात्रेयो रैवतको[10] वामदेवस्ततः परम् ।
ततो व्यासः शुकश्चैव[11] एकादश समीरिताः ॥ ६६ ॥
मानवौघे नृसिंहश्च महेशो भास्कर[12]स्तथा ।
महेन्द्रो माधवो विष्णुः षडेते च प्रकीर्त्तिताः ॥ ६७ ॥
नमोऽन्ते योजये[13]द्देवि दिव्यौघे परमं शिवम्[14] ।
महाशिवञ्च सिद्धौघे मानवौघे सदाशिवम्[15] ॥ ६८ ॥
ततः पीठं समभ्यर्च्य देवीमावाहयेत् प्रिये ।
महापद्मवनान्तःस्थे कारणानन्दविग्रहे ।
सर्वभूतहिते मातरेह्येहि परमेश्वरि ॥ ६९ ॥

---

1. ङ, त्रि चत्वारिक । 2. ङ, संस्पृष्ट्वाभ्यर्च्य ।
3. ङ, महाग्रासं । 4. ङ, भावहम् ।
5. क, ग, ङ, शुद्धपुष्पाक्षते ।
6. क, ग, घ, न्यासः पूर्वोक्तमन्त्रैस्तु चा ।
7. ङ, स्तस्या । 8. ङ, स्थिता ।
9. ङ, ऋतुः स्मृतः । 10. क, देवतको ।
11. ङ, व्यासश्च शुक्रश्च । 12. क, ग, घ भार्गव ।
13. ङ, पूजये । 14. ङ, परमः शिवः । 15. ङ, शिवः ।

देवेशि भक्तिसुलभे सर्वावरणसंयुते[1] ।
यावत्त्वां पूजयामीह[2] तावत्त्वं सुस्थिरा भव ॥ ७० ॥
मन्त्रेणानेन चावाह्य यजेद्देवीमनन्यधीः[3] ।
ध्यात्वा मुद्रां प्रदर्श्यार्चेत्[4] गन्धपुष्पाक्षतादिभिः ॥ ७१ ॥
चिन्मयस्याप्रमेयस्य निर्गुणस्या[5]शरीरिणः ।
साधकानां हितार्थाय ब्रह्मणो रूपकल्पना ॥ ७२ ॥
लिङ्ग[6]स्थण्डिलवह्न्यम्बुसूर्पकुड्यपटेषु च[7] ।
मण्डले फलके मूर्द्ध्नि हृदि वा दश कीर्त्तिताः ॥ ७३ ॥
एषु स्थानेषु देवेशि यजन्ति परमां शिवाम्[6] ।
अरूपां रूपिणीं[10] कृत्वा कर्मकाण्डरता नराः ॥ ७४ ॥
गवां सर्वाङ्गजं क्षीरं स्रवेत् स्तनमुखाद् यथा[11] ।
तथा सर्वगतो[12] देवः प्रतिमादिषु राजते ॥ ७५ ॥
आभिरूप्याच्च[13] बिम्बस्य[14] पूजायाश्च विशेषतः ।
साधकस्य च विश्वासात् सन्निधौ[15] देवता भवेत् ॥ ७६ ॥
गवां सर्पिः शरीरस्थं न करोत्यङ्गपोषणम्[16] ।
स्वकर्मरचितं दत्तं पुनस्तामेव पोषयेत्[17]* ॥ ७७ ॥

---

* ङ पुस्तके इतः पूर्व्वं "स्वकर्म्मरचितं दत्तमहन्तामेव पोषणम्" इति श्लोकार्द्धमधिकमस्ति ।

1. ङ, परिवारसमन्विते ।
2. ङ, पूजयिष्यामि ।
3. क, देवीञ्च पूजयेत् सुधीः; ख, यजेद्विद्यामनन्यधीः ।
4. ङ, प्रदर्श्याथ ।
5. ङ, निर्गुणस्य ।
6. ङ, कुण्ड ।
7. ख, ग, घ, अर्चाकुण्डपटेषु च ।
8. ङ, हृदयेषु प्रकीर्त्तिताः ।
9. ख, ङ, परमं शिव ।
10. ख, ङ, अरूपं रूपिणं ।
11. ङ, श्रावयेत्तन्मुखे यथा ।
12. ङ, सर्वाङ्गगो ।
13. ङ, श्च ।
14. क, ख, विश्वस्य ।
15. क, सविधौ; ङ, सात्त्विका ।
16. ख, द्रव्यं शक्तिः शरीरस्था न करोत्यात्मपोषणम् ।
17. ख, सुकर्मणार्चितं दत्तं पुनस्तामेव पोषयेत्; ङ, पुनस्त्वामेव पोषयेत् ।

एवं सर्वशरीरस्था सर्पिर्वत् परमेश्वरी ।
विना चोपासनां[1] देवि न ददाति फलं नृणाम् ॥ ७८ ॥
सकलीकृत्य तत्प्राणान् समुद्दीप्येन्द्रियाणि च[2] ।
प्रतिष्ठाप्यार्चयेद्देवि चान्यथा[3] निष्फलं भवेत् ॥ ७९ ॥
मन्त्रहीनं क्रियाहीनं विधिहीनञ्च यद् भवेत्[4] ।
क्षमया साधयेत्[5] सर्वं हीनमङ्गं पदं तथा[6] ॥ ८० ॥
नियमादतिरेकेण[7] यद् यत् कर्म करोति यः ।
न किञ्चिदप्यस्य फलं सिध्यति क्रमदोषतः[8] ॥ ८१ ॥
न्यूनातिरिक्तकर्माणि न फलन्ति कदाचन ।
यथाविधि कृतानीह[9] सत्कर्माणि फलन्ति हि ॥ ८२ ॥
तद्विधान[10]कृतं कर्म जपहोमार्चनादिषु ।
देवताप्रीतिदं[11] भूयाद् भुक्तिमुक्तिफलप्रदम्[12] ॥ ८३ ॥
देवस्य मन्त्ररूपस्य[13] मन्त्रव्याप्तिमजानताम् ।
कृतार्चनादिकं सर्वं[14] व्यर्थं भवति शाम्भवि ॥ ८४ ॥
यन्त्रं मन्त्रमयं प्रोक्तं देवता मन्त्ररूपिणी ।
यन्त्रे सा[15] पूजिता देवि सहसैव प्रसीदति ॥ ८५ ॥
कामक्रोधादिदोषोत्थ[16]सर्वदुःखनियन्त्रणात् ।
यन्त्रमित्याहुरेतस्मिन् देवः प्रीणाति पूजितः ॥ ८६ ॥
शरीरमिव जीवस्य दीपस्य स्नेहवत् प्रिये ।
सर्वेषामपि देवानां तथा[17]यन्त्रं प्रतिष्ठितम् ॥ ८७ ॥

---

1. ङ, विना च समयं ।
2. ख, ङ, तदीयानीन्द्रियाणि च ।
3. ग, घ, देवीमन्यथा ।
4. क्रियामुक्तिफलप्रदं ।
5. ग, घ, ईशः साधयते; ख, न तत् साधयते ।
6. ङ, मङ्गपदं वदेत् ।
7. क, नियमादविवेकेन ।
8. ङ, क्रमशेषतः ।
9. ङ, यथा करफलादीनि ।
10. ड, तद्विधानं ।
11. ङ, प्रीतिदा ।
12. ङ, फलप्रदा ।
13. ड, देवञ्च यन्त्ररूपञ्च ।
14. क, मन्त्रं ।
15. ङ, मन्त्रवत् ।
16. ङ, दोषस्य ।
17. ङ, यथा ।

तस्माद् यन्त्रं[1] लिखित्वा वा ध्यात्वा सावृतिकं[2] शिवम् ।
ज्ञात्वा गुरुमुखात् सर्वं पूजयेद्विधिना प्रिये ॥ ८८ ॥
एकपीठे पृथक् पूजां विना यन्त्रं करोति यः ।
अङ्गाङ्गित्वं परित्यज्य[3] देवताशापमाप्नुयात् ॥ ८९ ॥
एकपीठे कुलेशानि स्वे स्वे यन्त्रे[4] पृथक् पृथक् ।
यजेदावरणोपेता देवतास्तद्विधानतः[5] ॥ ९० ॥
आवाह्य देवतामेकां पूजयेदन्यदेवताम् ।
उभाभ्यां लभते शापं मन्त्री[6] चञ्चलमानसः ॥ ९१ ॥
इत्यादिलक्षणं ज्ञात्वा गुरुतः शास्त्रतः प्रिये[7] ।
विधिनाभ्यर्चयेत्[8] सम्यग्देवता सुप्रसीदति ॥ ९२ ॥
षोडशैरुपचारैस्तु साङ्गं सावरणं शिवम्[9] ।
पूजयेन्मूलमन्त्रेण गन्धपुष्पाक्षतादिभिः ॥ ९३ ॥
महाषोढोदिताशेषपरिवारांश्च शाम्भवि ।
प्रणवादिनमोऽन्तेन तत्तन्नाम्ना समर्चयेत्[10] ॥ ९४ ॥
आगमोक्तेन मार्गेण तर्पयेदलि[11]बिन्दुभिः ।
अङ्गुष्ठानामिकाभ्याञ्च नखे निःसृतमूर्द्ध्वतः[12] ।
स्वपात्रस्पन्दनिस्यन्दं[13] विधिवत् कुलनायिके ॥ ९५ ॥
सकृत्तर्पणमुत्सृज्य जप्त्वा मूलञ्च पादुकाम् ।
अन्तःशक्ति समुत्थाप्य[14] तर्पयेद्देह[15]देवताः ॥ ९६ ॥

---

1. क, मन्त्रं ।
2. ख, साकृतिकं ; ङ, पूजयेत् परमं ।
3. ङ, अङ्गहानिमपि त्यक्त्वा । 4. ख, छत्रे ।
5. क, ग, घ, दावरणोपेतां तां देवीं । 6. ङ, मन्त्र ।
7. ख, सतः । 8. ङ, विधानेनार्चयेत् । 9. ङ, प्रिये ।
10. ङ, तत्तदाम्नायमर्चयेत् । 11. क, ग, घ, द्वेवि
12. क, ग, घ, शनैर्निःशब्दमुक्तिदं ; ख, नखे निःशब्दमुद्रितम् ।
13. क, ग, घ, अपात्रस्यन्दनस्पन्दं ; ख, अपात्रस्थदमस्यन्दे ।
14. क, ङ, अनुस्मृत्य । 15. ङ, वीरदेवताः ।

अङ्गुष्ठो भैरवो देवो मध्यमा[1] चण्डिका प्रिये ।
मध्यमा[2]ङ्गुष्ठयोगेन तर्पयेत् कुलसन्ततिम् ॥ ९७ ॥
अङ्गुष्ठानामिकाभ्याञ्च वश्यकर्मणि तर्पयेत् ।
तर्जन्यङ्गुष्ठयोगेन तर्पयेदभिचारके ।
कनिष्ठाङ्गुष्ठयोगेन स्तम्भने तर्पयेत् प्रिये ॥ ९८ ॥
एवं सन्तर्प्य देवेशि[3] कुलद्रव्यैर्यथाविधि ।
देवतापुरतो देवि गुरुपङ्क्तीश्च पूजयेत्[4] ।
पङ्क्ति[5]त्रयक्रमेणाथ ज्ञात्वा सम्यगनन्यधीः ॥ ९९ ॥
कराभ्यां चिन्मुद्रां समधुनृ[6]कपालञ्च दधतीम्
द्रुतस्वर्णप्रख्यामरुणकुसुमालेपवसनाम् ।
कृपापूर्णापाङ्गीमरुणनयनामम्बरजटा[7]-
मुपेतां सिद्धौघैर्यजतु[8] गुरपङ्क्ति क्रमगतिम्[9] ॥ १०० ॥
एवं संपूज्य धूपञ्च दीपं नैवेद्यमेव च ।
आसवं पिशितोपेतं भक्ष्याणि विविधानि च ।
कदल्यादिफलान्येव ताम्बूलञ्च समर्पयेत् ॥ १०१ ॥
इति ते कथितं देवि कुलाचारस्य लक्षणम् ।
द्रव्यसंस्कारशुद्ध्यादि[10] किमन्यत् श्रोतुमिच्छसि ॥ १०२ ॥

इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये
सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चम-
खण्डे ऊर्द्ध्वाम्नायतन्त्रे द्रव्यसंस्कार-
विधानकथनं नाम षष्ठ
उल्लासः ॥ ६ ॥

1. ङ, अनामा । 2. ङ, अनामा । 3. ख, सन्तर्पयेद्देवि ।
4. ख, समर्चयेत्; ङ, तर्पयेत् । 5. क, ख, शक्ति ।
6. ङ, हस्ताभ्यां धेनुमुद्रां धनुरपि ।
7. क, घ, चर्वरकचां; ग, चर्वकवचां । 8. ङ, यजत ।
9. क, कृतमतिः । 10. ङ, कुलद्रव्यादिसंस्कारः ।

# सप्तम उल्लासः।



श्रीदेव्युवाच।

कुलेश वटुकादीनां बलिञ्च शक्तिलक्षणम्[1]।
तद्द्रव्यस्यैव[2] स्वीकारं वद मे करुणानिधे ॥ १ ॥

ईश्वर उवाच।

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि।
तस्य श्रवणमात्रेण[3] तत्त्वज्ञानं प्रकाशते ॥ २ ॥
यावन्नो वटुके दद्यात्तावन्नैव कुलेश्वरि।
तृप्यन्ति देवताः सर्वाः स्मरणाद् यजनादपि ॥ ३ ॥
वटुकादीन् यजेत्तस्माद् गन्धपुष्पासवामिषैः[4]।
तत्तन्मन्त्रविधानेन देवता प्रीतिमाप्नुयात् ॥ ४ ॥
यत्किञ्चिद्द्रव्यसंघातं पूजार्थं भोगहेतुना।
आनीतं दीयते भक्त्या क्षेत्रपेभ्यः[5] कुलेश्वरि ॥ ५ ॥
वटुकमन्त्रान् वक्ष्यामि शृणुष्व कुलनायिके।
यैः समर्चितमात्रेण सर्वे नश्यन्त्युपद्रवाः ॥ ६ ॥
तारत्रयं ततो देवीपुत्रेति वटुकेति च।
नाथेति कपिलजटाभारभास्वरपिङ्गल ॥ ७ ॥
त्रिनेत्रेति पदं पश्चाज्ज्वालामुखपदं ततः।
इमां पूजां बलिं गृह्णद्वयं पावकवल्लभा।
उक्तो वटुकमन्त्रोऽयं चतुश्चत्वारिंशदक्षरैः ॥ ८ ॥
बलिनानेन सन्तुष्टो वटुकः सर्वसिद्धिदः।
शान्तिं करोतु मे नित्यं भूतवेतालसेवितः ॥ ९ ॥

---

1. ग, घ, भक्तिलक्षणां। 2. ग, घ, तत्त्वलयस्य।
3. ख, स्मरणमात्रेण। 4. क, क्षतामिषैः। 5. ङ, क्षेत्रेभ्यश्च।

तारत्रयं ततः सर्वयोगिनीभ्यः पदं वदेत् ।
तत्पश्चात् सर्वभूतेभ्यः सर्वभूताधिवर्त्ति च ॥ १० ॥
पदं ताभ्यो[1] डाकिनीभ्यः शाकिनीभ्यः पदं वदेत् ।
त्रैलोक्येति पदं[2] चैव वासिनीभ्य इमां वदेत् ॥ ११ ॥
पूजां बलिं गृह्णयुग्मं स्वाहान्तो योगिनीमनुः ।
कथितोऽयं महेशानि मन्त्रः[3] पञ्चादशाक्षरः ॥ १२ ॥
या काचिद् योगिनी रौद्रा सौम्या घोरतरा परा[4] ।
खेचरी भूचरी व्योमचरी प्रीतास्तु मे सदा ॥ १३ ॥
तारत्रयं वदेत् सर्वभूतेभ्यः सर्व एव हि ।
पश्चाद् भूतपतिभ्यो हृद्युक्तः[5] सप्तदशाक्षरः ॥ १४ ॥
भूता ये विविधाकारा दिव्या[6] भौमान्तरिक्षगाः ।
पातालसंस्था ये केचिच्छिवयोगेन[7] भाविताः ॥ १५ ॥
ध्रुवाद्याः[8] सत्यसन्धाश्च इन्द्राद्याः स्वर्व्यवस्थिताः[9] ।
तृप्यन्तु प्रीतमनसः प्रतिगृह्णन्त्विमं बलिम् ॥ १६ ॥
तारत्रयं वदेद्देहि[10]युग्मं देवीपदं वदेत् ।
पुत्राय वटुकनाथाय पश्चादुच्छिष्टहारिणे* ।
सर्वविघ्नान् पदं पश्चात् नाशयद्वितयं तथा ॥ १७ ॥
गृह्णयुग्मं रुरुपदं क्षेत्रपालपदं ततः ।
सर्वोपचारसहितामिमां पूजां बलिं वदेत् ।
गृह्ण गृह्ण द्विठान्तोऽयं क्षेत्रपालमनुः प्रिये[11] ॥ १८ ॥

---

* ङ पुस्तके पद्यार्द्धमिदं नास्ति ।

1. ङ, ततः । 2. ङ, त्रैलोक्यविपदं ।
3. क, एक । 4. ङ, सौम्यतरा यदि ।
5. ख, स्वाहोक्तः ; ङ, हूँ फट् । 6. ख, ङ, दिक्षु ।
7. ङ, च्छिवे ये च न । 8. ङ, ब्रह्माद्याः ।
9. ङ, भृत्याः शक्त्युपबृंहिताः । 10. ङ, ततो देर्वि ।
11. ङ, भैरवाधिष्ठिताय च ।

चतुःषष्ट्यक्षरैः प्रोक्तः सर्वसिद्धिप्रदायकः* ।
योऽस्मिन् क्षेत्रे निवासी च क्षेत्रपालस्य किङ्करः ।
प्रीतोऽयं बलिदानेन सर्वरक्षां करोतु मे ॥ १९ ॥
तारत्रयं वदेत्तारं श्रीप्रासादपरामनुः ।
ह्रां ह्रीं ह्रूञ्च युगञ्चादौ भैरवाधिष्ठिताय च ॥ २० ॥
अक्षोभ्यानन्दतः[1] पश्चाद्धृदयाभीष्टदः[2] परम् ।
सिद्धार्थपदमाभाष्य पश्चादवतरद्वयम् ॥ २१ ॥
क्षेत्रपालपदं[3] पश्चात् महाशान्त[4] पदं ततः ।
मातृपुत्रपदं पश्चात् कुलपुत्रपदं तथा† ॥ २२ ॥
सिद्धिपुत्रपदं चास्मिन् स्थानाधिपपदं ततः ।
ग्रामाधिपतयेऽस्मिन् स्याद्देशाधिपतये ततः[5] ॥ २३ ॥
वदेद्वटुकनाथेति देवीपुत्रपदं ततः ।
मेघनादपदं पश्चात् प्रचण्डोग्रपदं वदेत् ॥ २४ ॥
कपालीति पदं पश्चाद्भीषणेति पदं वदेत् ।
स्यात् सर्वविघ्नाधिपतये इमां पूजां बलिं वदेत् ॥ २५ ॥
गृह्ण गृह्ण कुरुद्वन्द्वं मम दूरययुग्मकम् ।
ज्वलयुक्प्रज्वलयुगं[6] सर्वविघ्नानितीरयेत् ॥ २६ ॥
नाशयद्वितयं क्षां क्षं पश्चाद् बुद्धिमितीरयेत्[7] ।
क्षेत्रपालाय वौषट् हूं षष्ट्युत्तर[8]शताक्षरः ॥ २७ ॥

---

* ङ पुस्तके इत आरभ्य सार्द्धश्लोकद्वयं नास्ति ।

† ङ पुस्तके इतः परं श्लोकार्द्धं नास्ति ।

1. क, अक्षोभ्यान्तं ततः; ङ, अक्षोभ्यवन्दितः ।

2. ङ, धिष्ठितं । 3. ङ, द्वयं । 4. ङ, क्षेत्र ।

5. ङ, अस्मिन् ग्रामाधिपतयेऽस्मिन् देशाधिपतये ततः ।

6. ङ, ज्वलयुग्मं प्रज्वलयुग्मं ।

7. ग, घ, क्षां क्षीं तत्पश्चात् क्षमितीरयेत्; ङ, क्षां क्षीं क्षृं क्षैं क्षौं क्षन्ततः परम् ।

8. ङ, षड्डुत्तर ।

तारत्रयं वदेत् पश्चादमुक क्षेत्रपाल च ।
राजराजेश्वर इमां पूजां बलिमतः परम् ।
गृह्णयुग्मं द्विठान्तोऽयमष्टाविंशाक्षरो मनुः ॥ २८ ॥
अनेन बलिदानेन वटुवंश[1]समन्वितः ।
राजराजेश्वरो देवो मे प्रसीदतु सर्वदा ॥ २९ ॥
पश्चिमे वटुकं देव[2]मुत्तरे योगिनीबलिम् ।
पूर्वे भूतबलिं दद्यात् क्षेत्रपालञ्च दक्षिणे ।
राजराजेश्वरं मध्ये पूजयेत् कुलनायिके ॥ ३० ॥
अङ्गुष्ठानामिकाभ्याञ्च वटुकस्य बलिः स्मृतः ।
तर्जनीमध्यमानामिकाङ्गुष्ठै[3]र्योगिनीबलिः ॥ ३१ ॥
अङ्गुलीभिश्च सर्वाभिरुक्तो भूतबलिः प्रिये ।
अङ्गुष्ठतर्जनीभ्याञ्च क्षेत्रपालबलिर्भवेत्[4] ।
अङ्गुष्ठमध्यमाभ्याञ्च राजराजेश्वरस्य च ॥ ३२ ॥
वटुकादीन् समर्च्यैवं कुलदीपान् प्रदर्शयेत्[5] ।
ईषद्रक्तसुपिष्टेन चतुरङ्गुलिमानतः[6] ॥ ३३ ॥
दीपान् डमरुकाकारान् त्रिकोणानतिशोभनान्[7] ।
कर्षाज्यग्राहिणः कुर्य्यान्नव सप्ताथ पञ्च वा ॥ ३४ ॥
अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभान् ।
त्रिधा देव्युपरि भ्राम्य कुलदीपान् निवेदयेत् ॥ ३५ ॥
समस्तचक्रचक्रेशि देवेशि सकलात्मिके[8] ।
आरात्रिकमिदं देवि गृहाण मम सिद्धये ।
कुलदीपान् प्रदर्श्याथ शक्तिपूजां समाचरेत् ॥ ३६ ॥

1. क, वर्ग ; ङ, वटू । 2. ख, देयः ।
3. ख, ग, घ, तर्जनीमध्यमाङ्गुष्ठयोगेन ।
4. ङ, बलि हरेत् । 5. ङ, समर्चयेत् ।
6. ख, ईषत्पक्वसुपिष्टेन कुर्याद्विदाङ्गुलोन्नतान् ; ङ, ईषत् पललपिष्टेन कुर्याद्विदाङ्गुलान्वितान् । 7. ङ, शोभितान् ।
8. ग, घ, सकलाम्बिके ; ङ, समस्तचक्रचक्रेशि युते देवि कुलात्मिके ।

स्वशक्तिं वीरशक्तिं वा दीक्षितां गुरुमार्गतः[1] ।
पाययित्वा चरेत् पान[2]मिति शास्त्रस्य निश्चयः ॥ ३७ ॥
अदीक्षितां स्त्रियं कुर्यात् सद्यः संस्कारमम्बिके[3] ।
मन्त्रदीक्षाविधानेन[4] शुद्धा[5] भवति नान्यथा ॥ ३८ ॥
तस्मात् सुलक्षणां[6] शक्तिं गन्धपुष्पाक्षतादिभिः ।
अभ्यर्च्य देवताबुद्ध्या भोगपात्रं निवेदयेत् ॥ ३९ ॥
तदन्ते कन्यकाश्चापि प्रमदाश्च मनोहराः[7] ।
सम्पूज्य देवताबुद्ध्या दद्यात् पात्रं पृथक् पृथक् ॥ ४० ॥
अनिवेद्य तु यः शक्त्यै कुलद्रव्यं निषेवते ।
पूजितं निष्फलं तस्य देवता न प्रसीदति ॥ ४१ ॥
चण्डाली चर्मकारी[8] च मागधी[9] पुक्कसी तथा ।
श्वपची खट्टकी[10] चैव कैवर्त्ती विश्वयोषितः[11] ॥ ४२ ॥
कुलाष्टकमिदं प्रोक्तमकुलाष्टकमुच्यते[12] ।
कन्दुकी[13] शौण्डिकी चैव शस्त्रजीवी च रञ्जकी[14] ॥ ४३ ॥
गायकी रजकी शिल्पी कौलिकी[15] च तथाष्टमी ।
तन्त्रमन्त्रसमायुक्ता समयाचारपालिका ॥ ४४ ॥
कुमारी च व्रतस्था च योगमुद्राधरापि वा[16] ।
पूजाकाले स्वतः प्राप्ता[17] सा ज्ञेया सहजा बुधैः ॥ ४५ ॥

---

1. क, ग, घ, गुरुमग्रणीं ; ङ, दीक्षिताञ्च विशेषतः ।
2. ङ, पिबेन्मद्य ।
3. ङ, अभ्यर्च्य देवताबुद्ध्या मद्यसंस्कारमम्बिके ।
4. ग, घ, विधानज्ञः; ङ, विधानैश्च । 5. क, दीक्षा ; ङ, सिद्धो ।
6. ख, सलक्षणां ।
7. ख, मनोरमाः ।
8. ख, ग, घ, कर्मकारी ; ङ, कर्मचारी ।
9. ख, ङ, मातङ्गी ।
10. क, खटिका ; ख, कण्टकी ।
11. ग, घ, वैश्ययोषितः ।
12. ङ, स्वकुलाष्टकमुच्यते ।
13. ङ, कौञ्चिकी ।
14. ख, ग, घ, रक्षकी ।
15. ख, कौराकी ; ङ, केशरी ।
16. ग, घ, परा ।
17. ङ, कालेषु ताः प्रोक्ताः ।

उक्तजात्यङ्गनाभावे चातुर्वर्ण्याङ्गनां[1] यजेत् ।
सुरूपा तरुणी शान्ता[2] कुलाचारयुता[3] शुचिः ॥ ४६ ॥
शङ्काहीना भक्तियुक्ता गूढा शास्त्रोपजीविनी[4] ।
अलोलुपा[5] सुशीला च स्मितास्या प्रियवादिनी ॥ ४७ ॥
गुरुदैवतसम्भक्ता[6] सुचित्ता कौलिकप्रिया ।
विमत्सरा विशेषज्ञा देवताराधनोत्सुका ।
मनोहरा सदाचारा शक्तिरेषा[7] सुलक्षणा ॥ ४८ ॥
दुष्टोग्रा[8] कर्कशा क्रूरा[9] दुःखिता कुलदूषणी[10] ।
दुराचारा पराधीना भीता लुब्धा[11]तुराऽलसा[12] ॥ ४९ ॥
निद्रासक्तातिदुर्म्मेधा[13] हीनाङ्गी व्याधिपीडिता ।
दुर्गन्धा कुत्सिता[14] मूढा वृद्धोन्मत्ता रहस्यभित्[15] ॥ ५० ॥
कुतर्का कुत्सितालापा निर्लज्जा कलहप्रिया ।
विरूपोन्मार्गगा स्तब्धा पङ्ग्वन्धविकृतानना ।
ईदृशीं मन्त्रयुक्ताञ्च शक्तिं यागे[16] विवर्जयेत् ॥ ५१ ॥
ततोऽर्चनादिकं सर्वं मन्त्रोदक[17]पुरःसरम् ।
इतः पूर्वादि[18]मनुना मन्त्री देव्यै समर्पयेत् ॥ ५२ ॥
तारत्रयमितः पूर्वं प्राणबुद्धी ततः परम् ।
देहधर्माधिकारतो[19] जाग्रत्स्वप्नसुषुप्तिषु ॥ ५३ ॥
मनसा चेतसा[20] वाचा कर्मणा तत्परं वदेत् ।
हस्ताभ्याञ्च ततः पद्भ्यामुदरेण ततः परम् ॥ ५४ ॥

---

1. क, चोत्तरन्तु गतां ; ख, ग, घ, चातुर्वर्ण्यगतम् । 2. ङ, कान्ता ।
3. ङ, स्वकुलाद्युदिता । 4. ख, ङ, गूढशास्त्रोपयोगिनी ।
5. क, अनुत्तमा । 6. ङ, सद्भक्ता । 7. ङ, शक्तिरेका ।
8. ग, घ, पुष्टाङ्गी । 9. ख, ङ, स्तब्धा । 10. ङ, दूषिता ।
11. ख, वृद्धा । 12. ङ, पराधीना भावहीना दुराचारातुराऽलसा ।
13. ख, दुर्गन्धा । 14. ख, ङ, दुःखिता ।
15. क, ग, घ, रहस्यभीः । 16. ख, शक्तिर्यागे ; ङ, शक्तियोगे ।
17. ङ, मन्त्रादेश । 18. क, इतः परादि ।
19. ङ, धर्माधिकारान्ते । 20. ङ, च ततो ।

शिश्ना च यत् स्मृतं[1] पश्चाद् यदुक्तं यत् कृतं वदेत् ।
तत् सर्वं गुरवे चान्ते[2] मत्समर्पितमस्त्विति ।
स्वाहान्तो मनुरित्युक्तस्त्रिसप्तत्यक्षरः[3] प्रिये ॥ ५५ ॥
ज्ञानतोऽज्ञानतो वापि यन्मया क्रियते शिवे[4] ।
तव कृत्यमिदं सर्वमिति ज्ञात्वा[5] क्षमस्व मे ॥ ५६ ॥
एवं सम्प्रार्थ्य देवेशि स्तुत्वा नत्वा च भक्तितः ।
प्रधानदेवतामूर्त्तौ परिवारान् समर्चयेत्[6] ।
एवं सावरणां देवीं चिन्तयेत् स्वहृदम्बुजे[7] ॥ ५७ ॥
शेषिकायै समर्प्यात्म[8]मूलमन्त्रेण शोधयेत् ।
स्याद्वाग्भवं हृदुच्छिष्टचाण्डालि तदनन्तरम्[9] ॥ ५८ ॥
वदेन्मातङ्गि सर्वन्ते वश्यङ्कुरुयुगन्ततः[10] ।
एकविंशतिवर्णैश्च शेषिकामनुरीरितः ॥ ५९ ॥
मन्त्रेणानेन निर्माल्यं शेषिकायै समर्पयेत् ।
देवीमुच्छिष्टमातङ्गीं ध्यायेत् त्रैलोक्यमोहिनीम्[11] ॥ ६० ॥
वीणावाद्यविनोदगीतनिरतां नीलांशुकोल्लासिनीं[12]
बिम्बोष्ठीं नवयावकार्द्रचरणामाकीर्णकेशालकाम्[13] ।
मृद्वङ्गीं[14] सितशङ्खकुण्डलधरां माणिक्यभूषोज्ज्वलां[15]
मातङ्गीं प्रणतोऽस्मि सुस्मितमुखीं[16] देवीं शुकश्यामलाम् ॥६१॥

---

1. ङ, यत् कृतं । 2. ङ, गुरुदेवान्ते । 3. ङ, स्त्रिसप्तद्व्यक्षरः ।
4. ङ, शिव ; ङ, सदा । 5. ख, ङ, मातः ।
6. क, ख, समुल्लसेत् ; घ, समुद्वसेत् ; ङ, समर्पयेत् ।
7. क, ख, घ, उद्वसेत् स्वहृदम्बुजे ; ङ, हृदयाम्बुजे ।
8. ङ, समर्प्याथ ।
9. ङ, स्मृत्वा गुरुपदुच्छिष्टचाण्डाली तदनन्तरम् ।
10. ङ, वशङ्कुरि च युग्मकम् ।
11. ख, लौकिकमोहिनी ; ङ, कौलिकमोहिनीं ।
12. क, ख, नीलांशुकोद्भासिनीं ।
13. क, केशालतां ; ख, केशाङ्गनाम् ; ङ, केशाननां ।
14. क, कृष्णाङ्गीं । 15. ङ, पुष्पोज्ज्वलां ।
16. ङ, प्रणमामि सस्मितमुखीं ।

ततः श्रीगुरुरूपाय[1] साक्षात् परशिवाय च ।
कराभ्यां पात्रमुद्धृत्य सद्वितीयं समर्पयेत् ॥ ६२ ॥
स्वसम्प्रदाय[2]संयुक्तैर्वीरैश्च सह पूजयेत्[3] ।
अन्योन्यवन्दनं कृत्वा पिबेत्तत्तदनुज्ञया[4] ॥ ६३ ॥
सव्येनोद्धृत्य पात्रन्तु मुद्रां कृत्वाऽपसव्यतः ।
यथाविधि द्वितीयेन गृह्णीयान्मन्त्रमुच्चरन् ॥ ६४ ॥
पिशितं माषमात्रन्तु द्रव्यं[5] चुल्लुकसम्मितम् ।
आत्मदेहत्रयं तत्त्वं[6] त्रयेणाथ विशोधयेत्[7] ॥ ६५ ॥
तरुणोल्लाससहितः प्रसन्नवदनेक्षणः ।
गुरुः शिष्यान् समाहूय दद्यात्तत्त्वत्रयं प्रिये[8] ॥ ६६ ॥
शिष्योपायनमादाय शुद्धात्मा कुसुमादिकम् ।
यथाशक्ति निवेद्याथ[9] वित्तशाठ्यविवर्जितः ॥ ६७ ॥
प्रणम्य बहिरष्टाङ्गं प्रविश्यान्तः शनैः प्रिये ।
समर्प्यो[10]पायनं भक्त्या शिवाय गुरुरूपिणे ॥ ६८ ॥
ग्रथिताङ्गुष्ठकौ[11] कृत्वा करौ सक्ता[12]ग्रतर्जनी ।
जानुभ्यामवनिं गत्वा पञ्चाङ्गं प्रणमेद् गुरुम् ॥ ६९ ॥
वामाऽङ्गुष्ठानामिकाभ्यां दक्षहस्तप्रसारितम् ।
स्पृष्ट्वा विशुद्धहृदय ईषदानतमस्तकः[13] ॥ ७० ॥
वामाङ्गुष्ठानामिकाभ्यां शिष्याय श्रीगुरुः प्रिये ।
प्रकृत्याद्यैः पृथिव्यन्तैश्चतुर्विंशतिभिः प्रिये[14] ॥ ७१ ॥

---

1. ङ, गुरुपादाय ।
2. ङ, सत्सम्प्रदाय ।
3. ङ, पूजनं ।
4. ङ, पिबेच्च तदनुज्ञया ।
5. ङ, मांसपात्रन्तु मद्यं चुल्लुकसन्निभम् ।
6. घ, ङ, तद्वत् ।
7. ङ, विशोधकं ।
8. ङ, पिबेत् ।
9. ख, ङ, विनीतात्मा ।
10. क, तामर्प्यो ।
11. ङ, गृहीत्वाङ्गुष्ठकौ ।
12. ङ, नम्रा ।
13. ङ, विशुद्धहृदयमीषदानतमस्तकम् ।
14. ङ, शिवैः ।

स्वरैरशुद्धतत्त्वैश्च वाग्भवेन[1] कुलेश्वरि ।
संयुक्तेनात्मतत्त्वेन[2] स्थूलदेहं[3] विशोधयेत् ॥ ७२ ॥
मायादिपुरुषान्तैश्च शुद्धाशुद्धैश्च सप्तभिः ।
तत्त्वैः स्पर्शाह्वयैर्वर्णैः[4] कामराजेन मन्त्रवित् ।
युक्तेन विद्यातत्त्वेन सूक्ष्मदेहं विशोधयेत् ॥ ७३ ॥
शुद्धैः शिवादिविद्यान्तैः पञ्चतत्त्वैश्च व्यापकैः[5] ।
परया[6] शिवतत्त्वेन परं देहं विशोधयेत् ॥ ७४ ॥
षट्त्रिंशत्तत्त्वसहितमालिन्या बालया[7] प्रिये ।
सर्वतत्त्वाश्रयं बीजं सर्वतत्त्वै[8] र्विशोधयेत् ॥ ७५ ॥
शोधयेति पदं दद्यात् सद्वितीयमलिं गुरुः[9] ।
चुल्लुकं गुरुणा दत्तं शोधयामीति चोच्चरन् ।
भक्त्या चावनतः शिष्यो निःशब्दं त्रिः पिबेदलिम्[10] ॥ ७६ ॥
पाणिभ्यां[11] संस्पृशेद्देहं सर्वतत्त्वं समुच्चरन् ।
शिरःप्रभृतिपादान्तं शुद्धं देहं विचिन्तयेत्[12] ॥ ७७ ॥
स्थूलान्तमात्मतत्त्वं स्यात्[13] सूक्ष्मं विद्यान्तगोचरम् ।
परान्तं शिवतत्त्वं स्यादिति तत्त्वत्रयं जगत्[14] ॥ ७८ ॥
एवं तत्त्वत्रयज्ञानं गुरोर्ज्ञात्वा य आचरेत् ।
स जीवन्नेव मुक्तः स्यादिति शङ्करभाषितम् ॥ ७९ ॥

---

1. ङ, र्विशुद्धितत्त्वैश्च वाग्भवैर्न ।
2. ख, संयुक्तेनामृतत्वेन; ङ, संयुक्तेनाथ तत्त्वेन ।
3. क, ग, घ, स्वात्मदेहं ।
4. क, सुवर्णवर्णैश्च; ग, घ, तत्त्वैः स्यात् सर्ववर्णैश्च ।
5. ङ, शिवादिशुद्धविद्यान्तैः पञ्चतत्त्वैश्च व्यापकम् ।
6. क, ख, परम ।
7. ङ, मालिन्याऽवलया ।
8. ङ, तत्त्वत्रयाश्रितं बीजं सर्वतत्त्वं ।
9. क, शोधयेत्त्रितयं दद्यात् सद्वितीयमलिं गुरुम्; ङ, शोधयेत्त्रिपदञ्चाथ सद्वितीयानिला गुरुः ।
10. ग, घ, शनैः । 11. क, पदाभ्यां । 12. ङ, विशोधयेत् ।
13. ङ, स्खलन्ति तत्त्वमन्नं स्यात् । 14. क, यजेत् ।

ततः स्वीकृत्य च गुरुः शिष्येभ्यः शेषदो भवेत् ।
आदाय गुरुणा दत्तं सद्वितीयासवं[1] पिबेत् ॥ ८० ॥
श्रीगुरुज्येष्ठपूज्यानां पुरतः[2] कुलनायिके ।
नोपविश्य पिबेन्मद्यम् इति शास्त्रस्य निर्णयः[3] ॥ ८१ ॥
प्राणभेदफलोल्लासप्रणामस्थितिलक्षणम् ।
अविज्ञायाचरेद् यस्तु स भवेदापदाम्पदम् ॥ ८२ ॥
निर्मन्त्रं न पिबेन्मद्यम् प्रायश्चित्तं विधीयते* ।
तस्मान्मन्त्रविधानेन कर्तव्यं कुलनायिके ॥ ८३ ॥
इदं पवित्रममृतं पिबामि भवभेषजम्[4] ।
पशुपाशसमुच्छेद[5]कारणं भैरवोदितम् ॥ ८४ ॥
चित्ते स्वातन्त्र्यसारत्वात्तदानन्दमयात्मनः[6] ।
तन्मयत्वाच्च भावानां भावाश्चान्तर्हिता रसे[7] ॥ ८५ ॥
सुषुम्नान्तं विकाशाय सुरसस्तेन पीयते[8] ।
तस्मादिमां सुरां देवीं पूर्णोऽहं त्वां पिबाम्यहम्[9] ॥ ८६ ॥
मन्त्रेणानेन देवेशि मूलमन्त्रेण मन्त्रवित् ।
अनाकुलमनाः कुर्यादलिपानं शनैः शनैः ॥ ८७ ॥
स्वात्ममूलत्रिकोणस्थे कोटिसूर्यसमप्रभे[10] ।
कुण्डल्याकृतिचिद्रूपे[11] हुनेद् द्रव्यं समन्त्रकम् ॥ ८८ ॥

---

* ङ पुस्तके पानभेदादि विधीयते इत्यन्तं सार्द्धपद्यं न दृश्यते ।

1. क, ख, द्वितीयमासवं । 2. ङ, पूजाभ्यां सर्वतः ।

3. ङ, प्रायश्चित्तीभवेत प्रिये । 4. ङ, जगतां परभेषजं ।

5. ङ, भवोच्छेद ।

6. ख, चित्तस्वातन्त्र्यसारत्वात्तस्यानन्दमयः स्वतः; ग, चित्तेष्वात्तं त्रिसारत्वात्तस्यानन्दमयात्मनः ; ङ, चित्ते स्वातन्त्र्यरूपत्वात्तदानन्दमयः स्वतः । 7. ङ, भावाच्चान्तरितासवे ।

8. ख, ङ, स्वस्वातन्त्र्यविकाशाय स्वरसस्तेन पीयते ।

9. ङ, पिबाम्यतः ।

10. ख, स्वात्ममूलत्रिकोणोद्यत्कोटिसूर्यसमप्रभा ; ङ, तस्मान्मूल ।

11. ख, चिद्द्वीपे ; ङ, कुण्डलाकृतिचिद्रूपे ।

अहन्तापात्रभरितमिदन्तापरमामृतम् ।
पराहन्तामये वह्नौ होमस्वीकारलक्षणम्[1] ॥ ८९ ॥
गुरुदैवतमन्त्राणामैक्यं सञ्चिन्तयेद्धिया ।
यावदुल्लासपर्यन्तमुपदेशे पिबेन्मधु ॥ ९० ॥
चुल्लन सिद्धिदं प्रोक्तं[2] दीपो ज्ञानप्रदायकः ।
पानात् परपदप्राप्तिः कौले लयमितीरितम्[3] ॥ ९१ ॥
भोजनान्ते विषं मद्यं मद्यान्ते भोजनं विषम् ।
अमृतं तद्विजानीयाद् यदन्नं सुरया सह ॥ ९२ ॥
चर्वणेन युतं पानममृतं कथितं प्रिये ।
चर्वणेन विना पानं केवलं विषवर्द्धनं[4] ॥ ९३ ॥
पानञ्च त्रिविधं प्रोक्तं दिव्यवीरपशुक्रमात् ।
दिव्यं देव्यग्रतः पानं वीरं मुद्रासने कृतम्[5] । ॥ ९४ ॥
स्वेच्छया पशुवत्पीतं[6] पशुपानमितीरितम् ॥ ९५ ॥
भुक्तिमुक्तिप्रदं दिव्यं वीरं भुक्तिप्रदं भवेत्[7] ।
पशुपानं नरकदं प्रोक्तं[8] पानफलं प्रिये[9] ॥ ९६ ॥
दृष्टिमानसवाक्काये यावन्नो भवति भ्रमः[10] ।
तावत् पानं प्रकुर्वीत[11] पशुपानमतः परम् ॥ ९७ ॥
यावन्नेन्द्रियवैकल्यं यावन्नो मुखवैकृतम् ।
तावदेव पिबेन्मद्यमन्यथा पतनं भवेत्[12] * ॥ ९८ ॥

---

* ङ पुस्तके इतः परं सार्द्धश्लोको नास्ति ।

1. ङ, होमे स्वीकारलक्षणम् ।
2. ङ, चरुकः सिद्धिदः प्रोक्तो ।
3. ख, ग, परतरप्राप्तिः कौले नियतमीरितं ; ङ, कुलेषु लय ईरितः ।
4. ख, ङ, विषभक्षणम् ।
5. ख, ङ, मृद्धासने हृतं ।
6. ख, ङ, पानं ।
7. ख, ङ, मुक्तिप्रदं प्रिये ।
8. ङ, नारकेयमेवं ।
9. क, तत्फलं विफलं प्रिये ।
10. ख, वाक्यानां वल्लभश्चातिविभ्रमः ।
11. ख, भवेत्पानं प्रकर्त्तव्यं ।
12. क, तावद् यः पिबते मद्यं स मुक्तो नात्र संशयः ।

पूर्णाभिषेकयुक्तानां पानं देवि निगद्यते ।
कराभ्यां पात्रमुद्धृत्य[1] स्मरेन्मूलञ्च पादुकाम्[2] ।
आगलान्तं पिबेद्द्रव्यं स मुक्तो नात्र संशयः ॥ ९९ ॥
पीत्वा पीत्वा पुनः पीत्वा यावत् पतति भूतले ।
उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते ॥ १०० ॥
आनन्दात्तृप्यते देवी मूर्च्छया भैरवः[3] स्वयम् ।
वमनात्[4] सर्वदेवाश्च तस्मात्त्रिविधमाचरेत् ॥ १०१ ॥
दिव्यपानरतानां वै यत् सुखं कुलयोगिनाम् ।
तत् सुखं सार्वभौमस्य नृपस्यापि न विद्यते ॥ १०२ ॥
यत् सुखं कुलनिष्ठानां कुलद्रव्यनिषेवनात् ।
तत् सौख्यमेव मोक्षः स्यात् सत्यमेव वरानने ॥ १०३ ॥
इति ते कथितं किञ्चित्[5] वटुशक्त्यादिपूजनम् ।
समासेन कुलेशानि किं भूयः श्रोतुमिच्छसि ॥ १०४ ॥

इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे ऊर्ध्वाम्नायतन्त्रे वटुकशक्त्यादिपूजनं नाम सप्तम उल्लासः ॥ ७ ॥

1. ख, घटमुद्धृत्य ।
2. क, स्मरेच्च मूलपादुकां ।
3. ख, इच्छाया भैरवः; ङ, मूर्च्छनाद् भैरवः ।
4. क, रमणात्; ख, वासनात् ।
5. ङ, सम्यक् ।

# अष्टम उल्लासः ।

श्रीदेव्युवाच ।

कुलेश श्रोतुमिच्छामि करुणामृतवारिधे[1] ।
उल्लासभेदं देवेश[2] द्रव्यपात्रादिसङ्गमम् ॥ १ ॥
रत्युद्वासनकालञ्च[3] श्रीचक्रस्थितिमेव च[4] ।
चेष्टां कौलिकशक्तीनां वद मे परमेश्वर ॥ २ ॥

ईश्वर उवाच ।

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण जायते दिव्यभावना ॥ ३ ॥
आरम्भस्तरुणश्चैव यौवनं प्रौढमेव[5] च ।
तदन्तश्चोन्मनाश्चैव ततोल्लास[6]श्च सप्तमः ॥ ४ ॥
तत्त्वत्रयं स्यादारम्भः कथितः कुलनायिके ।
कथित[7]स्तरुणोल्लासस्तरुणं सुखमम्बिके ॥ ५ ॥
यौवनं मनसः सम्यगुल्लासः सुस्थितिः प्रिये ।
स्खलनं दृङ्मनोवाचां[8] प्रौढमित्यभिधीयते ॥ ६ ॥
समुल्लासपरे चक्रे य इच्छेत्[9] पात्रमेलनम्[10] ।
अर्वाक् प्रौढसमुल्लासं नैव कुर्यात् कदाचन * ।
यथाधिकारं तत्रापि कर्त्तव्यं पात्रमेलनम् ॥ ७ ॥

---

* ङ पुस्तके श्लोकोऽयं न दृश्यते ।
1. ख, करुणाकरवारिधे । 2. ङ, द्रव्यस्य ।
3. ङ, रत्युल्लासकमेवञ्च ।
4. ग, घ, स्थितिभैरवः; ङ, स्थितिरेव च ।
5. योवनः प्रौढ एव । 6. ख, वश्योल्लास; ङ, मनोल्लास ।
7. ग, कायत । 8. ख, हृन्मनोवाचाम् ।
9. ङ, समुल्लासे स्थिते चक्रे यदीच्छेत् ।
10. ख, यच्छेत्पात्रस्य मेलनं ।

अदीक्षितैरनाचारैरतन्त्रज्ञै[1]रदैवतैः ।
दूषकैः समयभ्रष्टैर्न[2] कुर्याद् द्रव्यसङ्गतिम् ॥ ८ ॥
अभिज्ञं मन्यमानैश्च प्रपञ्चव्रतधारिभिः[3] ।
पशुभिः क्षुद्रकर्मस्थैर्न कुर्याद् द्रव्यसङ्गतिम्[4] ॥ ९ ॥
स्त्रीद्विष्टै[5]र्गुरुभिः शप्तैर्भक्तिहीनै[6]र्दुरात्मभिः ।
कुलोपदेशहीनैश्च न कुर्याद् द्रव्यसङ्गतिम् ॥ १० ॥
पदवाक्यप्रमाणज्ञाः श्रुतिस्मृत्यर्थवेदिनः[7] ।
कुलधर्मानभिज्ञाश्चेत्तत्सङ्गं परिवर्जयेत्[8] ॥ ११ ॥
सत्कुले[9] च प्रसूता वा वृद्धाश्चाचारवर्त्तिनः[10] ।
त्वत्पूजाविमुखाः स्युश्चेत्तत्संसर्गं परित्यजेत् ॥ १२ ॥
स्त्रीपुत्रमित्रबन्धूनां स्निग्धानामपि[11] पार्वति ।
कुलाचारानभिज्ञानां सङ्गतिं वर्जयेत्प्रिये ॥ १३ ॥
अदृष्टपौरुषाणाञ्च[12] देशान्तरनिवासिनाम् ।
विना सङ्केतयोगेन न कुर्याद् द्रव्यसङ्गतिम् ॥ १४ ॥
एकपात्रं न कुर्वीत यदि साक्षात् कुलेश्वरः ।
मन्त्राः पराङ्मुखा यान्ति[13] विघ्नश्चैव पदे पदे ॥ १५ ॥
स्वपात्रस्थितहेतुञ्च न दद्याद्भैरवाय च ।
यदि दद्यात्कुलेशानि देवताशापमाप्नुयात् ॥ १६ ॥
आसनं भोजनं पात्रमम्बरं शयनादिकम्[14] ।
अनभिज्ञैरनर्हैश्च सङ्गमं[15] नैव कारयेत् ॥ १७ ॥

---

1. ङ, रतत्त्वज्ञै । 2. ङ, समरभ्रष्टै ।
3. घ, चारिभिः । 4. ङ, पात्रसङ्गतिम् ।
5. ग, घ, स्त्रीपुष्टैः । 6. ङ, भ्रातृहीनै ।
7. ख, श्रुतिस्मृत्यर्थसेविनः ; ङ, श्रुतिस्मृत्यर्थवित्तमाः ।
8. क, तत्सर्वं वर्जयेत्प्रिये । 9. ग, घ, ङ, तत्कुले ।
10. ङ, वृद्धाचारप्रवर्त्तकाः । 11. ग, शिष्याणामपि ।
12. ङ, पुरुषाणाञ्च । 13. ङ, स्तस्य ।
14. ङ, सुपानच्छयनानि च । 15. ख, सङ्करम् ।

स्रोतोभेदेन वा कुर्यात्कौलिकः[1] पात्रमेलनम् ।
पूर्वदक्षिणयोरैक्यमुदक्पश्चिमयोस्तथा * ॥ १८ ॥
तस्मिन् क्रमार्चनपरैर्वीरैः स्वसदृशैरपि ।
कामिनीभिश्च तत्कुर्यात् स्रोतसाञ्च चतुष्टये ॥ १९ ॥
योगिभिर्योगिनीभिश्च प्रदत्तं पूर्णपात्रकम् ।
स्वमातृपादुकामूलमन्त्रजप्तं[2] पिबेत्प्रिये ॥ २० ॥
क्वचित् यदृच्छया प्राप्त[3]मलिपात्रन्तु[4] भक्तितः ।
आदाय पूर्ववज्जप्त्वा पिबेद्देवि गुरुं स्मरन्[5] ॥ २१ ॥
गुरुशक्तिसुतानाञ्च गुरुज्येष्ठकनिष्ठयोः† ।
स्वज्येष्ठस्यापि चोच्छिष्टं खादेन्नान्यस्य पार्वति ॥ २२ ॥
शक्त्युच्छिष्टं पिबेद् द्रव्यं वीरोच्छिष्टञ्च चर्वणम् ।
आत्मोच्छिष्टं न दातव्यं परकीयं न भक्षयेत् ॥ २३ ॥
उच्छिष्टं भक्षयेत् स्त्रीणां ताभ्यो नोच्छिष्टमर्पयेत्[6] ।
चक्रमध्येऽपि देवेशि अन्यथा[7] पतनं भवेत् ॥ २४ ॥
कनिष्ठानां स्व[8]शिष्याणां दद्यादुच्छिष्टमम्बिके ।
दद्यात् स्नेहेन योऽन्येभ्यः[9] स भवेदापदाम्पदम् ॥ २५ ॥
आसवोच्छिष्टपात्रन्तु[10] यो वा गृह्णाति मोहतः[11] ।
स्नेहाल्लोभात्[12] भयाद्वापि देवताशापमाप्नुयात् ॥ २६ ॥

---

* ङ पुस्तके इत आरभ्य सार्द्धश्लोकद्वयं न दृश्यते ।
† ङ पुस्तके अस्मात्परं सार्द्धश्लोको न दृश्यते ।
1. ङ, कौलिकैः । 2. क, मन्त्रं चन्द्रं ।
3. ङ, यदृच्छया तु संप्राप्त । 4. ख, आलिपानन्तु ।
5. ङ, देवि गुरुं स्वञ्च स्मरेत्प्रिये ।
6. ख, नान्योच्छिष्टं समर्पयेत् । 7. ङ, नान्यथा ।
8. ङ, नान्तु । 9. ख, योऽन्योन्यम् ।
10. ड, आसनोच्छिष्टपात्रन्तु ।
11. ख, मूढधीः ; यो गृह्णाति विमूढधीः ।
12. ख, मोहात् ।

प्रौढोल्लासे कुलेशानि कुर्याद्बलिविसर्जनम्[1] ।
पूजागृहाद्बहिः कुर्यात्त्रिकोणे तु[2] गृहान्तरे ॥ २७ ॥
गन्धपुष्पाक्षतैः पूज्य[3] ध्यायेदुच्छिष्टभैरवम् ।
गदात्रिशूलडमरुपालहस्तं त्रिलोचनम् ।
कृष्णाभं भैरवं ध्यायेत् सर्वविघ्ननिवारणम् ॥ २८ ।
तारत्रयं समुच्चार्य पश्चादुच्छिष्टभैरवम् ।
एह्येयुग्मं बलिं गृह्णयुग्मं फट् च[4] द्विठान्तकः ॥ २९ ॥
बल्युद्वासन[5]मन्त्रोऽयं द्वाविंशतिभिरक्षरैः ।
शान्तिस्तवं पठेत्पश्चात्तर्पयेदलिबिन्दुभिः ॥ ३० ॥

यजन्ति देव्यो हरपादपङ्कजम्
प्रसन्नधामामृत[6]मोक्षदायकम् ।
अनन्तसिद्धान्तमय[7]प्रबोधकं
नमामि चाष्टाष्टकयोगिनीगणम्[8] ॥ ३१ ॥

योगिनीचक्रमध्यस्थं मातृमण्डलवेष्टितम् ।
नमामि शिरसा नाथं भैरवं भैरवीप्रियम् ॥ ३२ ॥
अनादिघोरसंसारध्वान्तैकध्वंसकारिणे[9] ।
नमः श्रीनाथवैद्याय[10] कुलौषधिविधायिने ॥ ३३ ॥
आपदो दुरितं रोगाः समयाचारलङ्घनात्[11] ।
ये ते सर्वे[12] व्यपोहन्तु दिव्यचक्रस्य मेलनात् ॥ ३४ ॥
आयुरारोग्यमैश्वर्य्यं कीर्त्तिर्लाभः सुखं जयः ।
कान्तिर्मनोहरा चास्तु पान्तु सर्वाश्च देवताः ॥ ३५ ॥

---

1. ङ, कुर्य्यादलिविवर्ज्जनम् ।
2. ख, त्रिकोणं भूतगृहान्तरे ; ङ, त्रिकोणं वा । 3. ङ, शिष्यो ।
4. क, ख, ग, घ, हुँ फडिति [बहुतरपुस्तकेषु हुँ फडिति पाठे सत्यपि मन्त्रस्य द्वाविंशत्यक्षरायोगात् सोऽस्माभिर्मूलपाठे समुज्झितः]।
5. क, बल्युल्लासन । 6. ङ, प्रसन्नवामस्थित ।
7. ख, ङ, मति । 8. ङ, चक्राष्टकयोगिनीशम् ।
9. ङ, परिध्वंसैकहेतवे । 10. ङ, वेद्याय ।
11. ख, मेलनात् । 12. ङ, तत्सर्वाणि ।

सम्पूजकानां प्रतिपालकानां
यतीन्द्रयोगीन्द्रतपोधनानाम् ।
देशस्य राष्ट्रस्य कुलस्य राज्ञः
करोतु शान्तिं भगवान् कुलेशः ॥ ३६ ॥
नन्दन्तु साधक[1]कुलाढ्य[2]दर्शका ये
सिंहासनाद्युषितशाक्त[3]महान्वया ये ।
नन्दन्तु सर्वकुलकौल[4]रताः परे ये
चान्ये विशेषपदभेदकशाम्भवा ये ॥ ३७ ॥
नन्दन्तु सिद्धगुरवस्तदनुक्रमज्ञा[5]
ज्येष्ठान्वया[6] समयिनो वटुकाः कुमार्यः ।
ये[7] योगिनीप्रवरवीरकुले प्रसूता
नन्दन्तु भूमिपतिगो[8]द्विजसाधुलोकाः ॥ ३८ ॥
नन्दन्तु नीतिनिपुणा निरवद्यनिष्ठा
निर्मत्सरा निरुपमा निरुपद्रवाश्च ।
नित्यं निरञ्जनरता गुरवो निरीहाः[9]
शान्ताश्च शान्तमनसो हृत[10]शोकशङ्काः ॥ ३९ ॥
नन्दन्तु योगनिरताः कुलयोगयुक्ता
ह्याचार्यसामयिकसाधकपुत्रकाश्च ।
गावो द्विजा युवतयो यतयः कुमार्यो
धर्मे चरन्तु निरता गुरुभक्तलोकाः ॥ ४० ॥

---

1. ख, षड्विध ।
2. क, घ, कुलान्वय ।
3. क, सृष्टाद्यलक्षचतुरुक्त; ग, घ, सृष्ट्याद्यनीक्ष्य चतुरस्र ।
4. ङ, साधुकुलमर्म ।
5. ङ, स्तदनुक्रमौघाः ।
6. ङ, ज्येष्ठानुगाः ।
7. ख, षड् ।
8. ख, भूमिपतयो; ङ, आचार्यभूमिपतयो ।
9. ख, निरंशाः । 10. ख, हृत ।

नन्दन्तु साधककुला ह्यलमात्मनिष्ठाः[1]
शापाः पतन्तु समयद्विषि[2] योगिनीनाम् ।
सा शाम्भवी स्फुरतु कापि ममाप्यवस्था
यस्यां गुरोश्चरणपङ्कजमेव सत्यम्[3] ॥ ४१ ॥
याश्चक्रक्रमभूमिकावसतयो नाडीषु याः संस्थिता
याः कायोद्भतरोमकूपनिलया याः संस्थिता धातुषु[4] ।
उच्छ्वासोर्मिमरुत्[5]तरङ्गनिलया निश्वासवासाश्च या-
स्ता देव्यो रिपुपक्षभक्षणरता नन्दन्तु[6] कौलार्चिताः[7] ॥ ४२ ॥
या देव्यः[8] कुलसम्भवाः क्षितिगता या देवता[9]स्तोयगा
या नित्यं प्रथितप्रभाः शिखिगता या मातरिश्वालयाः[10] ।
या व्योमाहित[11]मण्डलामृतमया याः सर्वगाः सर्वदा-
स्ताः सर्वाः[12] कुलमार्गपालनपराः[13] शान्तिं प्रयच्छन्तु मे ॥ ४३ ॥
ऊर्ध्वे ब्रह्माण्डतो[14] वा दिवि गगनतले भूतले वा तले वा[15]
पाताले वानले[16] वा सलिलपवनयोर्यत्र कुत्र स्थिता वा ।
क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिकेन[17]
प्रीता देव्यः सदा नः शुभ[18]बलिविधिना पान्तु वीरेन्द्रवन्द्याः[19] ॥

---

1. ख, साधकगुणाद्यनिमाद्यनिष्ठाः । ग, घ, ह्यनिमादिनिष्ठाः; ङ, कुलान्यलिमात्मनिष्ठाम् ।
2. ङ, पापा जहन्तु समयाद्विशि । 3. ख, लभ्यं; ङ, सेव्यं ।
4. ख, साधुषु । 5. क, ग, उल्लासोर्मि; ङ, उच्छ्वासोर्मिमहा ।
6. ङ, भक्षणपरास्तृप्यन्तु । 7. ङ, मन्त्रार्चिताः ।
8. ग, या दिव्याः । 9. ख, ग, घ, या या रता ।
10. क, या नित्या मुदितप्रभाः; ख, या देव्यः कथिताः प्रभाकरगता; ङ, निधिगता या या भुवि प्रस्थिताः ।
11. ग, घ, व्योमामृत । 12. ङ, देव्यः ।
13. क, ग, घ, पलायनरताः । 14. ख, ब्रह्माण्डके ।
15. ख, ङ, निष्कले वा । 16. क, ग, ङ, तले ।
17. ख, क्षेत्रोपक्षेत्रपीठादिषु च कृतपदा धूपदीपालिमांसैः; ङ, तीर्थे पीठोपपीठादिषु च कृतपदास्ते सुराः सर्वपूज्याः । 18. ख, कृत ।
19. ङ, स्तृप्यन्तु ज्ञानदेव्यस्त्वलिबलिपिशितैर्धूपदीपादिकेन ।

ब्रह्मा श्रीः शेषदुर्गागुहवटुकगणा[1] भैरवाः क्षेत्रपाद्या
वेतालादित्यरुद्रग्रहवसुमनुसिद्धाप्सरोगुह्यकाद्याः[2] ।
भूता गन्धर्वविद्याधरऋषिपितृयक्षासुराः किन्नराद्या[3]
योगीशाश्चारणाः कि[4]म्पुरुषमुनिवराश्चक्रगाः पान्तु सर्वे ॥ ४५ ॥
देहस्थाखिलदेवता गजमुखाः[5] क्षेत्राधिपा भैरवा
योगिन्यो वटुकाश्च यक्षपितरो भूताः पिशाचा ग्रहाः ।
अन्ये भूचरखेचरा दिशिचरा वेतालकाश्चेटका-
स्तृप्यन्तां कुलपुत्रकस्य पिबतः पानं सदीपञ्चरुम्[6] ॥ ४६ ॥
सत्यञ्चेद् गुरुवाक्यमेव पितरौ देवाश्च चेद् योगिनी[7]
प्रीता चेत्[8] परदेवता यदि भवेद्वेदाः[9] प्रमाणं हि चेत्
शाक्तेयं[10] यदि दर्शनं भवति चेदाज्ञाप्यमोघापि चेत्[11]
सत्यञ्चापि च कौलधर्मपरमं स्यान्मे जयः सर्वदा ॥ ४७ ॥
नन्दन्तु साधकाः सर्वे नश्यन्तु कुलदूषकाः ।
अन्तःस्था शाम्भवी मेऽस्तु[12] प्रसन्नोऽस्तु गुरुः सदा ॥ ४८ ॥
यद्येषा भैरवी देवी यदि भैरवशासनम् ।
यद्येष कुलधर्मः स्यात्तदा नश्यन्तु दूषकाः ॥ ४९ ॥
यासामाज्ञाप्रभावेण स्थापितं भुवनत्रयम् ।
नमस्ताभ्यः समस्ताभ्यो योगिनीभ्यो निरन्तरम् ॥ ५० ॥

---

1. क, ग, घ, गणपतिराड् ।
2. ङ, रुद्रादित्या ग्रहास्ते वसुपितृमुनयः सिद्धयो गुह्यकाद्याः ।
3. क, पितृयक्षासुरा दिव्ययोगा; ङ, पितरः किन्नरा यक्षनागा ।
4. क, ग, घ, योगीशाश्चारुरूपाम् ।
5. ङ, गजमुखाः ।
6. ङ, पितरः पीत्वा समीपे चरुम् ।
7. ङ, चतुरो वेदागमा योगिनी ।
8. ड, मन्त्राश्चेत् ।
9. ङ, ब्रह्म ।
10. ङ, शाक्तीयं
11. ङ, चेदाज्ञाप्यमायान्ति चेत् ।
12. ङ, अवस्था शाम्भवीमास्तु ।

पिबन्तु[1] मातरः सर्वाः पिबन्तु कुलसत्तमाः[2] ।
पिबन्तु भैरवाः सर्वे मम देहे व्यवस्थिताः ॥ ५१ ॥
तृप्यन्तु[3] मातरः सर्वाः समुद्राः सगणाधिपाः ।
योगिन्यः क्षेत्रपालाश्च मम देहे व्यवस्थिताः ॥ ५२ ॥
शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बसंयुतम् ।
कालाग्न्यादिशिवान्तञ्च जगद् यज्ञेन तृप्यतु ॥ ५३ ॥
द्वारस्था मणिमण्डपस्य परितः श्रीनन्दने कानने
शून्यागारविहारकन्दरमठे वोम(व्योम्नि)श्मशाने स्थिताः ।
कूपस्थानगताश्चतुष्पथगताः सन्देश[4]संस्थाश्च ये ।
पङ्क्त्यर्थविहकेतुमानकुसुमात् गृह्णन्तु ते पान्तु च* ॥ ५४ ॥
पठित्वाभ्यर्चनापात्रं समुद्धृत्य[5] गुरुः प्रिये ।
ततो दद्यात् स्वशिष्याय[6] प्रसादं कुलनायिके ॥ ५५ ॥
स्वाभीष्टचेष्टाचरणं[7] प्रौढान्तः परिकीर्त्तितः ।
प्रौढान्तोल्लासिताद्देवि मुदिते योगिमण्डले[8] ।
योगिनीमण्डले चैव क्रमादानन्दमुच्यते[9] ॥ ५६ ॥
तदारूढेषु वीरेषु कार्याकार्यं न विद्यते ।
इच्छैव शास्त्रसम्पत्तिरित्याज्ञा परमेश्वरि ॥ ५७ ॥
तत्र यद् यत् कृतं कर्म शुभं वा यदि वाऽशुभम् ।
तत्सर्वं देवताप्रीत्यै जायते सुरसुन्दरि ॥ ५८ ॥

---

* ख ङ पुस्तकयोः श्लोकोऽयं न दृश्यते ।

1. क, तृप्यन्तु । 2. क, समुद्राः सगणाधिपाः ।

3. ङ, पिबन्तु ।

4. क, ग, घ, सन्देह ।

5. क, समुद्धास्य ; ग, समुद्धास्य ।

6. ख, सुशिष्याय ।

7. ङ, चेष्टाकरणम् ।

8. ङ, प्रौडान्तो न्यासने देवैर्यदि तैर्योगमण्डले ।

9. ख, चक्रसानन्दमुच्यते ; ङ, योगिनीमण्डलैश्चैव क्रियमाणं तदुच्यते ।

जल्पो जपफलं तन्द्रा[1] समाधिरभिजायते[2]।
विक्रिया पूजनं देवि उदितं भैरवीवलिः[3] ॥ ५९ ॥
मुक्तिः स्याच्छक्तिसंयोगः स्तोत्रं तत्कालभाषितम्[4]।
न्यासोऽवयवसंस्पर्शो भोजनं[5] हवनक्रिया ॥ ६० ॥
वीक्षणं ध्यानमीशानि शयनं वन्दनं भवेत्।
तदुल्लासे कृता नाना[6] या चेष्टा सा च सत्क्रिया।
कार्याकार्यविचारन्तु यः करोति स पातकी ॥ ६१ ॥
एतच्चक्रगता वीरा[7] विज्ञेयाः परयोगिनः।
येनाप्नुवन्ति[8] मनुजाः साक्षाद्भैरवरूपताम्[9] ॥ ६२ ॥
सम्मोदः परमानन्दः पतनं ज्ञानवर्द्धनम्[10]।
वेणुवीणादिवाद्यञ्च कवितारचनादिकम् ॥ ६३ ॥
रोदनं भाषणं पातः[11] समुत्थानं विजृम्भनम्।
गमनं विक्रिया देवि योग इत्यभिधीयते ॥ ६४ ॥
चक्रेऽस्मिन् योगिनो वीरा योगिन्यो मदमन्थराः[12]।
समाचरन्ति देवेशि यथोल्लासं मनोगतम् ॥ ६५ ॥
शनैः पृच्छन्ति[13] पार्श्वस्थान् विस्मृत्यात्मविवक्षितम्[14]।
निधाय[15] वदने पात्रं निर्विण्णा निवसन्ति च ॥ ६६ ॥
मत्ता स्वपुरुषं मत्वा कान्तान्यमवलम्बते[16]।
तथैव पुरुषश्चापि प्रौढान्तोल्लाससंयुतः[17] ॥ ६७ ॥

---

1. ङ, जपो जल्पः फलं तन्त्राः। 2. ख, ङ, रभिधीयते।
3. ङ, छेदितं भैरवे बलिः। 4. ख, कुलभाषणम्।
5. क, कण्डूतिः। 6. क, तदुल्लासैः; ङ, तदुल्लासरतानान्तु।
7. क, धीरा। 8. क, ङ, ये चाप्नुवन्ति।
9. ङ, रूपभाक्।
10. ख, समोदः कोपशमनं तपनोम्नानननर्त्तनं; ङ, सम्बोधकोपशमनं पतनाङ्गारवर्जितम्। 11. क, ख, भाषणं प्रातः; ङ, पतनञ्चैव।
12. क, मदकुञ्जरा। 13. ङ, पृच्छति।
14. ङ, विचेष्टितम्। 15. ङ, विधाय।
16. ग, घ, ङ, यदन्यं पुरुषं मोहात् कान्तान्यमवलक्षते।
17. ग, ङ, तस्यैव पुरुषश्चापि प्रौढोल्लासेन संयुतम्।

पुरुषः पुरुषं मोहादालिङ्गत्यनाङ्गनाम् ।
पृच्छति स्वपतिं मुग्धा कस्त्वं काहम् इमे च के[1] ॥ ६८ ॥
किं कार्यं वयमायाताः किमर्थमिह संस्थिताः ।
उद्यानं किमिदं हन्त गृहं किं प्राङ्गणं[2] किमु ॥ ६९ ॥
मुखे आपूर्य मदिरां पाययन्ति स्त्रियः प्रियान् ।
उपदंशं मुखे क्षिप्त्वा निक्षिपन्ति प्रियानने ॥ ७० ॥
गृह्णन्त्यन्योन्यपात्राणि[3] व्यञ्जनानि च शाम्भवि ।
धृत्वा शिरसि नृत्यन्ति मद्यभाण्डानि योगिनः[4] ॥ ७१ ॥
अज्ञानकरतालान्तमस्पष्टा[5]क्षरगीतकम् ।
प्रस्खलत्पदविन्यासं[6] नृत्यन्ति कुलशक्तयः ॥ ७२ ॥
योगिनो मदमत्ताश्च पतन्ति प्रमदोरसि[7] ।
मदाकुलाश्च योगिन्यः पतन्ति पुरुषोपरि[8] ॥ ७३ ॥
मनोरथसुखं पूर्णं कुर्वन्ति च परस्परम् ।
इत्यादिविविधां चेष्टां कुर्वन्ति कुलनायिके ॥ ७४ ॥
विकृतिं मनसो हित्वा यदोल्लासः प्रवर्त्तते[9] ।
तदा तु देवताभावं भजन्ते योगिपुङ्गवाः ॥ ७५ ॥
कौलिकान् भैरवावेशान् यो वा निन्दति मूढधीः ।
तं नाशयन्त्य[10]सन्देहं योगिन्यः कुलनायिके[11] ॥ ७६ ॥
न निन्देन्न हसेत् क्वापि चक्रे मधुमदालसान्[12] ।
एतच्चक्रगतां वार्त्तां बहिर्नैव प्रकाशयेत् ॥ ७७ ॥

---

1. क, इहाम्बिके । 2. क, किम्वाथ गगनं ।
3. ङ, गृह्णन्ति पाणिमन्योन्यम् । 4. क, योषितः ।
5. ङ, सङ्गीतकरतालञ्च विस्पष्टा ।
6. ङ, वसनास्पन्दविन्यासम् ।
7. ङ, परि । 8. ख, रसि । 9. ङ, य उल्लासं प्रकुर्वते ।
10. ङ, न्त्व । 11. ख, कुलनायिकाः ।
12. ख, ङ, मदाकुलान् ।

तेभ्यो द्रोहं न कुर्वीत नाहितञ्च[1] समाचरेत् ।
भक्त्या सत्कारयेदेतान्[2] गोपयेच्च प्रयत्नतः[3] ॥ ७८ ॥
चक्रे मदाकुलान् दृष्ट्वा चिन्तयेद्देवताधिया ।
मोदते वन्दते[4] भक्त्या स गच्छेत्[5] योगिनीपदम् ॥ ७९ ॥
पश्येदेवम्विधं चक्रं यो भक्त्या कौलिकः प्रिये ।
व्रततीर्थतपोदानयज्ञकोटिफलं लभेत् ॥ ८० ॥
उन्मनाः पतनोत्थाने मूर्च्छना[6] च मुहुर्मुहुः ।
उन्मनाख्य[7]तदुल्लासे चक्रे वीरसमर्चिते[8] ॥ ८१ ॥
चिरं संविदधाते तौ यौ हि कर्मपराक्षरौ[9] ।
परं ब्रह्मानुसन्धानाकाङ्क्षिणौ कुलनायिके[10]* ॥ ८२ ॥
देहेन्द्रियाणामवशः समवस्था[11]निगद्यते ।
समवस्थाभिधे तस्मिन् ततोल्लासे समं भवेत्[12] ॥ ८३ ॥
परामन्त्रस्वरूपोऽसौ जायते मूर्च्छना परा[13] ।
मूर्च्छनासन्निकर्षो हि मूलं[14]मुक्तेः परं विदुः ॥ ८४ ॥

---

* ङ पुस्तके इतः परं श्लोकद्वयं नास्ति ।

1. क, न कोपञ्च ।
2. ख, संरक्षयेदेतान्; ङ, संग्राहयेत्तच्च ।
3. ङ, गोपयेन्मातृजारवत् ।
4. क, नन्दते ।
5. ङ, यदीच्छेत् ।
6. क, उन्मादापतनोत्थान; ख, पतनोत्पातं मूर्च्छना च ।
7. ख, उन्मत्ताख्य; ङ, उन्मनाश्च ।
8. ख, षष्ठे वीरसमन्विते; ग, घ, षष्ठे वीरसमर्चिते; ङ, भवेत् षष्ठे समन्वितः ।
9. क, विशद्विदधते तौ यौ विदन्तु परमाक्षरौ ।
10. ख, परं ब्रह्मानुसन्धानकाङ्क्षितौ कुलनायिके; ङ, परं ब्रह्मार्थसन्धानात्कालं भुङ्क्ते परं विदुः ।
11. ख, ङ, श्चानवस्था ।
12. ख, अनवस्थाविधानेऽस्मिन् उल्लासे सप्तमे प्रिये ।
13. ख, मूर्च्छनाभवः ।
14. ख, सन्निकर्षोर्मिमूलं ।

अन्तर्लक्ष्यो[1] बहिर्दृष्टिर्निमेषोन्मेषवर्जितः ।
एषा तु शाम्भवी[2] मुद्रा सर्वतन्त्रेषु गोपिता[3] ॥ ८५ ॥
सर्वोत्तीर्णा सदाऽहन्ता सामरस्यसमाकृतिः[4] ।
अनयो[5]ल्लासिनो वीराः शिवा एव न संशयः ॥ ८६ ॥
नराः किमपि[6]जानन्ति स्वात्मध्यानपरायणाः[7] ।
तदा यत्परमं सौख्यमिति वक्तुं न शक्यते[8] ॥ ८७ ॥
स्वयमेवानुभूयन्ते शर्कराः[9] क्षीरपानवत् ।
ईदृशं[10] तादृशं सौख्यमिति वक्तुं न शक्यते ।
दृश्यते[11] पुलकाद्यैर्य[12]त्तद्ब्रह्मध्यानमुच्यते ॥ ८८ ॥
यत्सुखं विद्यते ध्याने देहावेशकरं[13]परम् ।
कथितुं नैव शक्नोमि[14] प्रबुद्धस्तत्समाहितः[15] ॥ ८९ ॥
ब्रह्मध्यानपरानन्द[16]पराः सुकृतिनो नराः ।
क्षणेऽप्यन्तर्हिते तस्मिन्[17] शोचयन्ति हतप्रभाः[18] ॥ ९० ॥
सप्तमोल्लासयुक्तानां त्वद्भक्तानां महाफलम्[19] ।
अष्टौ त्रिकालज्ञानोत्थाः प्रत्ययाश्च कुलेश्वरि ।
अष्टावस्थाश्च कम्पाद्या[20] जायन्ते नात्र संशयः ॥ ९१ ॥

---

1. क, अन्तर्यक्षो ; ख, अन्तर्लक्षं । 2. क, ख, खेचरी ।
3. ख, शिवस्य समवायिनी ; घ, शिवस्य समबोधिनी ; ङ, शिवस्य कामदायिनी ।
4. ख, सामरस्यचमत्कृतिः ; ङ, समासा चैव सत्कृतिः ।
5. ङ, अलुब्धो । 6. ख, ङ, न किञ्चिदपि ।
7. ख, ङ, स्वानुष्ठानपरायणाः ।
8. ख, तदा यत्परमं सौख्यं मनोवाचामगोचरम् ; ङ, तदा यान्ति ।
9. ख, ग, घ, स्वयमेवानुभवति शर्करा । 10. ङ, कीदृशं ।
11. ख, दधते । 12. क, ग, पुलकाद्यैश्च ।
13. ग, घ, देवावेशकरं । 14. ङ, शक्नोति ।
15. ग, समाधिनः ; घ, समाधिना ; ङ, प्रबुद्धा तु विशेषतः ।
16. ङ, ज्ञानामृतानन्द । 17. क, चित्ते ।
18. ख, शोचन्त्यल्पहिता इव ; ङ, शोचन्त्यासंहता इव ।
19. ख, ड, तद्भक्तानां महात्मनाम् । 20. ङ, श्चार्यपाद्या ।

बहुनात्र किमुक्तेन अणिमाद्यष्टसिद्धयः।
प्रतीहारिपदं प्राप्ताः सेवन्ते मन्दिरं चिरम् ॥ ९२ ॥
ये गुणाः परमेशस्य पञ्चवक्त्रतनोः[1] शुभाः।
ते गुणाः कुलतत्त्वज्ञे तत्त्वज्ञानसमाहृताः[2] ॥ ९३ ॥
आरम्भस्तरुणश्चैव यौवनं प्रौढमेव च।
तदन्तो जाग्रदित्युक्तश्चोन्मनाः[3] स्वप्न उच्यते ॥ ९४ ॥
समवस्था[4] सुषुप्तिः स्यादवस्थालयसंयुता।
सप्तोल्लासञ्च[5] यो वेत्ति स मुक्तः स च कौलिकः ॥ ९५ ॥
प्रवृत्ते भैरवीचक्रे सर्वे वर्णा द्विजातयः।
निवृत्ते भैरवीचक्रे सर्वे वर्णाः पृथक् पृथक् ॥ ९६ ॥
स्त्री वाथ पुरुषः षण्डश्चण्डालो वा द्विजोत्तमः।
चक्रेऽस्मिन्नैव भेदोऽस्ति सर्वे शिवसमाः[6] स्मृताः ॥ ९७ ॥
नागरि निर्झराद्यम्बु[7] गङ्गां प्राप्य यथैकताम्।
याति श्रीचक्रमध्येऽपि चैकत्वं सर्वमानवाः ॥ ९८ ॥
क्षीरेण सहितं तोयं क्षीरमेव यथा भवेत्।
तथा श्रीचक्रमध्ये तु जातिभेदो न विद्यते ॥ ९९ ॥
स्वर्गादिपुण्यलोकेषु देवादन्यद् यथा नहि।
तथैव चक्रमध्येऽपि देवताः सर्वमानवाः ॥ १०० ॥
जातिभेदो न चक्रेऽस्मिन् सर्वे शिवसमाः स्मृताः।
वेदेऽपि स्थित[8]मेवं हि सर्वं हि ब्रह्म चाब्रवीत् ॥ १०१ ॥
बहुनात्र किमुक्तेन चक्रमध्ये कुलेश्वरि।
मद्रूपाः पुरुषाः सर्वे त्वद्रूपाः प्रमदाः प्रिये ॥ १०२ ॥

---

1. ख, पञ्चतत्त्वमनः; ङ, पञ्चवक्त्रमनोः।
2. क, समाहिताः; घ, तत्तज्ज्ञानसमाहृताः।
3. ख, ग, घ, जाग्रदित्युक्तः सोन्मनाः।
4. ग, घ, अनर्चार्हा; ङ, अनवस्थः। 5. ङ, अष्टोल्लासञ्च।
6. ख, ङ, देवसमाः। 7. ङ, नानामोदगताम्भस्तु।
8. ग, घ, वेदोपस्थित।

चक्रमध्ये तु मूढात्मा जातिभेदं करोति यः ।
तं भक्षयन्ति योगिन्यस्त्वां शपे कुलनायिके[1] ॥ १०३ ॥
स्त्रीणामन्यतमं स्थानं पुंसामन्यतमं पृथक् ।
अथवा मिथुनं कृत्वा क्रमात्समुप[2]वेशयेत् ॥ १०४ ॥
पङ्क्त्याकारेण वा सम्यक् चक्राकारेण वा प्रिये ।
शिवशक्तिधिया सर्वं चक्रमध्ये समर्चयेत् ॥ १०५ ॥
अविभक्तौ यथा आवां लक्ष्मीनारायणौ यथा ।
यथा वाणीविधातारौ [3]तथा वीरः सशक्तिकः ॥ १०६ ॥
मधुकुम्भसहस्रैस्तु मांसभारशतैरपि ।
न तुष्यामि वरारोहे भगलिङ्गामृतं विना ॥ १०७ ॥
न चक्राङ्कं न पद्माङ्कं न वज्राङ्कमिदं जगत् ।
लिङ्गाङ्कञ्च भगाङ्कञ्च तस्माच्छक्तिशिवात्मकम् ॥१०८॥
शिवशक्तिसमायोगो यस्मिन् काले प्रजायते ।
सा सन्ध्या कुलनिष्ठानां समाधिः स विधीयते[4] ॥ १०९ ॥
कामुको न स्त्रियं गच्छेद् यदीच्छन्ती[5]मदीक्षिताम् ।
सद्यः संस्कारसंशुद्धां[6] विहितत्वात् स्त्रियं व्रजेत् ॥ ११० ॥
इति तत्त्वत्रयोल्लासपानभेदादि चोदितम् ।
समासेन कुलेशानि किं भूयः श्रोतुमिच्छसि ॥ १११ ॥

इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये सर्वागमोत्तमो-
त्तमे सपादलक्षग्रन्थे पञ्चमखण्डे ऊर्ध्वाम्नायतन्त्रे
तत्त्वत्रितयपानादिभेदकथनं नामाष्टम उल्लासः ॥ ८ ॥

---

1. ङ, तं शपन्ति कुलेश्वरि ।
2. क, त्तदुप ।  3. क, शतानन्दौ ।
4. क, स्तत्प्रतीयते ; ग, समाधिस्थः प्रतीयते ; ङ, समाधिस्था प्रतीयते । 5. ङ, दनिच्छन्ती । 6. ङ, दीक्षितां कुलजां मत्तां ।

# नवम उल्लासः।

श्रीदेव्युवाच।

कुलेश श्रोतुमिच्छामि योगं योगीशलक्षणम्[1]।
कुलभक्तार्चनफलं[2] वद मे करुणानिधे ॥ १ ॥

ईश्वर उवाच।

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि[3]।
तस्य श्रवणमात्रेण योगः साक्षात् प्रकाशते ॥ २ ॥
ध्यानन्तु द्विविधं प्रोक्तं स्थूलसूक्ष्मप्रभेदतः।
साकारं स्थूलमित्याहुर्निराकारन्तु सूक्ष्मकम् ॥ ३ ॥
स्थिरार्थं मनसः केचित्[4] स्थूल[5]ध्यानं प्रचक्षते।
स्थूलेऽपि निश्चलं चेतो भवेत् सूक्ष्मेऽपि निश्चलम्[6] ॥ ४ ॥
करपादोदरास्यादि[7]रहितं परमेश्वरम्।
सर्वतेजोमयं ध्यायेत् सच्चिदानन्दनिष्कलम्[8] ॥ ५ ॥
नोदेति नास्तमभ्येति न वृद्धिं याति न क्षयम्।
स्वयं विभात्यथान्यानि[9] भासयन्[10] साधनं विना ॥ ६ ॥
अनन्तं गतभारूपं[11] सत्तामात्रमगोचरम्।
मनसा मात्रसम्वेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्[12] ॥ ७ ॥

---

1. ङ, योगयोगीशलक्षणम्। 2. ख, परं।
3. ङ, योगयोगीशलक्षणम्।
4. ङ, स्थिरात्ममानसः कश्चित्। 5. क, स्थूले।
6. ङ, स्थूलेन निश्चितं चेतो भवेत् सूक्ष्मेऽपि सुस्थिति।
7. ङ, दराङ्गास्थि। 8. ख, परमानन्दलक्षणम्।
9. ख, विभात्यर्थमानम्। 10. ग, भासयेत्; ङ, भावयेत्।
11. ङ, अनवस्थञ्च तद्रूपम्।
12. क, ग, वचसा नात्मसम्वेद्यं तद्ध्यानम्; ङ, वचसात्मनि सायुज्यम्।

प्रणष्टवायुसञ्चारः[1] पाषाण इव निश्चलः ।
परजीवैकधामज्ञो[2] योगी योगविदुच्यते ॥ ८ ॥
यदत्र नात्र निर्भासः[3] स्तिमितोदधिवत् स्थितम् ।
स्वरूपशून्यं[4] तद्ध्यानं समाधिरभिधीयते ॥ ९ ॥
न किञ्चिच्चिन्तनादेव[5] स्वयं तत्त्वं प्रकाशते ।
स्वयं प्रकाशिते तत्त्वे तत्क्षणात्तन्मयो[6] भवेत् ॥ १० ॥
स्वप्नजाग्रदवस्थायां सुप्तवत्[7] योऽवतिष्ठते ।
निश्वासोच्छ्वासहीनश्च निश्चितं[8] मुक्त एव सः ॥ ११ ॥
निष्पन्दकरणग्रामः स्वात्मलीनमनोऽनिलः[9] ।
य आस्ते मृतवत्साक्षात् जीवन्मुक्तः स उच्यते* ॥ १२ ॥
न शृणोति न चाघ्राति न स्पृशति न पश्यति[10] ।
न जानाति सुखं दुःखं न सङ्कल्पयते[11] मनः ॥ १३ ॥
न चापि किञ्चिज्जानाति[12] न च बुध्यति काष्ठवत् ।
एवं शिवे विलीनात्मा समाधिस्थ इहोच्यते ॥ १४ ॥
यथा जले जलं क्षिप्तं क्षीरे क्षीरं घृते घृतम् ।
अविशेषो भवेत्तद्वज्जीवात्मपरमात्मनोः[13] ॥ १५ ॥
यथा ध्यानस्य सामर्थ्यात् कीटोऽपि भ्रमरायते ।
तथा समाधि[14]सामर्थ्याद्ब्रह्मभूतो भवेन्नरः ॥ १६ ॥

---

* अस्मात्परं श्लोकद्वयं क, ग, घ पुस्तकेषु न दृश्यते ।

1. ख, प्रणष्टबाह्यसञ्चारः ।
2. ख, परजीवस्य मर्मज्ञो ; क, ग, घ, परजीवेषु सन्मार्गी ।
3. ख, यदर्थमात्रनिर्भासः ; ङ, पदार्थमात्रनिर्भातम् ।
4. ङ, रूपशून्यञ्च । 5. ग, ङ, चिन्तनाद्देवि ।
6. ख, त्वन्मयो ; मन्मयो ।
7. ङ, स्वप्नवत् । 8. क, ग, निश्चलम् ।
9. क, ग, उन्मनोगतकौलिकः ; ङ, स्वात्मनात्मा च निश्चलः ।
10. ङ, न शृणोति न वा पश्येन्न तिष्ठति न गच्छति ।
11. ङ, न च संलिप्यते ।
12. ख, न चाभिमन्यते कश्चित् । 13. क, ख, परमात्मनि ।
14. घ, ङ, ध्यानस्य ।

क्षीरोद्धृतं घृतं यद्वत्तत्र क्षिप्तं न[1] पूर्ववत् ।
पृथक्कृतो[2] गुणेभ्यः स्यादात्मा तद्वदिहोच्यते[3] ॥ १७ ॥
यथा गाढान्धकारस्थो न किञ्चिदिह पश्यति ।
अलक्ष्यञ्च[4] तथा योगी प्रपञ्चं नैव पश्यति* ॥ १८ ॥
यथा निमीलने काले प्रपञ्चं नैव पश्यति ।
तथैवोन्मीलनेऽपि स्यादेतद्ध्यानस्य[5] लक्षणम् ॥ १९ ॥
जनः स्व[6]देहकण्डूतिं विजानाति यथा तथा ।
परं ब्रह्मस्वरूपी च वेत्ति विश्वविचेष्टितम्[7] ॥ २० ॥
विदिते परमे तत्त्वे वर्णातीते ह्यविक्रिये[8] ।
किङ्करत्वं हि गच्छन्ति मन्त्रा मन्त्राधिपैः सह ॥ २१ ॥
आत्मैकभावनिष्ठस्य या या[9] चेष्टा तदर्चनम् ।
यो यो जल्पः स सन्मन्त्र[10]स्तद्ध्यानं यन्निरीक्षणम् ॥ २२ ॥
देहाभिमाने गलिते विज्ञाते[11] परमात्मनि ।
यत्र यत्र मनो याति तत्र तत्र समाधयः ॥ २३ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परात्मनि[12] ॥ २४ ॥
योगीन्द्रेण यदा[13] प्राप्तं निर्मलं परमं पदम् ।
देवासुरपदं यत्तत्प्राप्तञ्चापि न गृह्यते[14] ॥ २५ ॥

---

* क, ग, घ पुस्तकेषु श्लोकार्द्धमिदं न दृश्यते ।

1. क, क्षिप्तन्तु ।
2. क, ग, कृत्वा ; ङ, कृते ।
3. ङ, तावदिहोच्यते ।
4. ख, अमनस्कस्तथा ।
5. ख, स्याच्चेद्देहध्यानस्य ।
6. ङ, जनस्य ।
7. क, ग, विश्वं सचेष्टितम् ।
8. ग, घ, वर्णे तडितविक्रमे ; ङ, वर्णातीतेऽस्तविक्रमे ।
9. क, ग, माया ।
10. ङ, स्वमन्त्रस्य ।
11. ख, ङ, विदिते ।
12. ख, परावरे ; ङ, परात्परे ।
13. ड, यथा ।
14. ङ, तद्वत्प्राप्यते चापि गर्ह्यते ।

यः पश्येत् सर्वगं शान्तमानन्दात्मक[1]मव्ययम् ।
तस्य किञ्चिदनालभ्यं ज्ञातव्यं नावशिष्यते[2] ॥ २६ ॥
सम्प्राप्ते ज्ञानविज्ञाने ज्ञेये च हृदि संस्थिते[3] ।
लब्धे शान्तिपदे[4] देवि न योगो नैव धारणा ॥ २७ ॥
परे ब्रह्मणि विज्ञाते समस्तैर्नियमैरलम् ।
तालवृन्तेन किं कार्यं लब्धे मलयमारुते ॥ २८ ॥
आसिका[5]बन्धनं नास्ति नासिकाबन्धनं न हि ।
न यमो नियमो[6]नास्ति स्वयमोमिति[7] पश्यताम् ॥ २९ ॥
न पद्मासनतो योगो न नासाग्रनिरीक्षणम्[8]* ।
ऐक्यं जीवात्मनो[9]राहुर्योगं योगविशारदाः ॥ 30 ॥
ध्यायतां[10] क्षणमात्रं हि श्रद्धया परमन्त्विह[11] ।
यद्भवेत् सुमहत्[12] पुण्यं तस्यान्तो नैव गण्यते[13] ॥ 31 ॥
क्षणं ब्रह्माहमस्मीति यः कुर्यादात्मचिन्तनम् ।
स सर्वं[14] पातकं हन्यात्तमः सूर्योदयो यथा ॥ 32 ॥
व्रतक्रतुतप[15]स्तीर्थदानदेवार्चनादिषु ।
यत् फलं कोटिगुणितं तदवाप्नोति तत्त्ववित् ॥ 33 ॥
उत्तमा सहजावस्था मध्यमा ध्यानधारणा ।
जपस्तुतिः स्यादधमा होमपूजाऽधमाधमा ॥ 34 ॥

---

* ङ पुस्तके अस्मात्परं "पद्मासनगतो योगी नासिकाग्रं निरीक्षयेत्" इति पद्यार्द्धमधिकं दृश्यते ।

1. ख, मानन्दात्मान ; ङ, मानन्दानन्द ।
2. ङ, न तस्य किञ्चिज्ज्ञातव्याज्ञातव्यात्मावशिष्यते ।
3. ङ, सिद्धये च हृदि स्थिते । 4. ङ, शान्तिप्रदे ।
5. ङ, नासिका । 6. ग, घ, नियमोऽनियमो ; ङ, नियमानियमो ।
7. ङ, स्वयमेवात्म ।
8. ख, ङ, निरीक्षणात् । 9. ग, घ, योगात्मनो ।
10. ख, ध्यानेन । 11. ख, महः ; ङ, पदम् ।
12. ङ, तत्समम् । 13. ख, विद्यते ; ग, घ, गद्यते ।
14. ख, ङ, तत्सर्वम् । 15. ङ, शतकृत्वस्तप ।

उत्तमा तत्त्वचिन्ता[1] स्याज्जपचिन्ता तु मध्यमा ।
शास्त्रचिन्ताऽधमा ज्ञेया लोकचिन्ताऽधमाधमा ॥ ३५ ॥
पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो[2] जपः ।
जपकोटिसमं ध्यानं ध्यानकोटिसमो लयः ॥ ३६ ॥
न हि ध्यानात्[3] परो मन्त्रो न देवस्त्वात्मनः[4] परः ।
नानुसन्धात्[5] परा पूजा न हि तृप्तेः परं फलम् ॥ ३७ ॥
अक्रियैव परा पूजा मौनमेव परो जपः* ।
अचिन्तैव परं ध्यानमनिच्छैव परं फलम्† ॥ ३८ ॥
मन्त्रोदकैर्विना सन्ध्यां पूजाहोमैर्विना तपः[6] ।
उपचारैर्विना पूजां[7] योगी नित्यं समाचरेत् ॥ ३९ ॥
निःसङ्गश्च विसङ्गश्च निस्तीर्णोपाधिवासनः ।
निजस्वरूपनिर्मग्नः स योगी परतत्त्ववित्‡ ॥ ४० ॥
देहो देवालयो देवि[8] जीवो देवः सदाशिवः[9] ।
त्यजे[10]दज्ञाननिर्माल्यं सोऽहम्भावेन पूजयेत् ॥ ४१ ॥
जीवः शिवः शिवो जीवः स जीवः केवलः शिवः ।
पाशबद्धः स्मृतो जीवः पाशमुक्तः सदाशिवः ॥ ४२ ॥
तुषेण बद्धो व्रीहिः स्यात्तुषाभावे हि तण्डुलः ।
कर्मबद्धः स्मृतो[11] जीवः कर्ममुक्तः सदाशिवः ॥ ४३ ॥

---

* श्लोकोऽयं ग, घ, ङ पुस्तकेषु न दृश्यते; किन्तु ङ पुस्तके "शिवशक्तिपरां पूजां योगी नैव समाचरेत्" इत्यर्द्धश्लोको दृश्यते ।

† अस्मात्परं ङ पुस्तके "यथा पङ्ग्वन्धबधिरमूकोन्मत्तजडादयः । निवसन्ति कुलेशानि तथा योगी स तत्त्ववित्" इत्यधिकः श्लोको दृश्यते ।

‡ क, ख, ग, घ, पुस्तकेषु श्लोकोऽयं न दृश्यते ।

1. क, ऽभिन्नचिन्ता । 2. ख, फलम् ।
3. ख, दानात्; ङ, नादात् । 4. ख, ङ, स्वात्मनः ।
5. ख, ङ, नानुसन्धेः । 6. ङ, जपः ।
7. ख, उपहारैर्विना पूजां; ङ, यागम् ।
8. क, देहे देवालये योगी । 9. ख, परः शिवः ।
10. क, घ, नश्ये । 11. क, सदा ।

अग्नौ तिष्ठति[1]विप्राणां हृदि देवो[2]मनीषिणाम् ।
प्रतिमास्वप्रबुद्धानां[3] सर्वत्र विदितात्मनाम् ॥ ४४ ॥
यो निन्दास्तुतिशीतोष्ण[4]सुखदुःखारिबन्धुषु ।
सम आस्ते स[5] योगीन्द्रो हर्षाहर्षविवर्जितः ॥ ४५ ॥
निस्पृहो नित्यसन्तुष्टः समदर्शी जितेन्द्रियः ।
आस्ते देहे प्रवासीव[6] योगी परमतत्त्ववित् ॥ ४६ ॥
निःसङ्कल्पो निर्विकल्पो निर्लिप्तोपाधिवासनः ।*
निजस्वरूपनिर्मग्नः स योगी परतत्त्ववित् ॥ ४७ ॥
यथा पङ्ग्वन्धबधिरक्लीबोन्मत्त[7]जडादयः ।
निवसन्ति कुलेशानि तथा योगी च तत्त्ववित् ॥ ४८ ॥
पञ्चमुद्रा[8]समुत्पन्नपरमानन्दनिर्भरः ।
य आस्ते स तु[9] योगीन्द्रः पश्यत्यात्मानमात्मनि ॥ ४९ ॥
अलिमांसाङ्गनासङ्गे यत् सुखं जायते प्रिये ।
तदेव मोक्षो[10] विदुषामबुधानान्तु[11] पातकम् ॥ ५० ॥
सदा मांसासवो[12]ल्लासी सदा चरणचिन्तकः[13] ।
सदा संशयहीनो[14] यः कुलयोगी स उच्यते ॥ ५१ ॥
पिबन्मद्यं पलं[15] खादन् स्वेच्छाचारपरायणः ।
अहं तदनयो[16]रैक्यं भावयन्निवसेत् सुखी[17] ॥ ५२ ॥

---

* श्लोकोऽयं ङ पुस्तके नास्ति ।

1. क, ग, घ निष्ठा तु । 2. ङ, वेदो ।
3. ख, ङ, स्वल्पबुद्धीनां; ग, घ, प्रतिमासु प्रबुद्धानाम् ।
4. ङ, शीलेषु । 5. ख, समश्चेत्सुख; ग, घ, समश्चेत् स तु ।
6. ङ, स्वर्गहीनोऽप्रयासी च । 7. ख, क्लीबमूक; ङ, मूकोन्मत्त ।
8. ख, द्रव्य । 9. ङ, आस्ते सर्वत्र । 10. ङ, पुण्यम् ।
11. ख, मनुजानान्तु; ङ, मवमानान्तु । 12. ङ, मांसरसो ।
13. ङ, सदा च परचिन्तकः । 14. घ, कदाशयविहीनो ।
15. ङ, वमन् । 16. ङ, अहं त्वमनयो । 17. ङ, सुखं ।

आमिषासवसौरभ्यहीनं यस्य मुखं भवेत्[1] ।
प्रायश्चित्ती स वर्ज्यश्च[2] पशुरेव न संशयः ॥ ५३ ॥
यावदासवगन्धः स्यात् पशुः[3] पशुपतिः स्वयम् ।
विनालिमांसगन्धेन साक्षात् पशुपतिः पशुः ॥ ५४ ॥
लोके निकृष्टमुत्कृष्टं लोकोत्कृष्टं (ष्ट) निकृष्टकम् ।
कुलमार्गे समुद्दिष्टं भैरवेण महात्मना ॥ ५५ ॥
अनाचारः सदाचारस्त्वकार्यं[4] कार्यमुत्तमम्[5] ।
असत्यमपि सत्यं स्यात् कौलिकानां कुलेश्वरि ॥ ५६ ॥
अपेयमपि पेयं स्यादभक्ष्यं भक्ष्यमेव च ।
अगम्यमपि गम्यं स्यात् कौलिकानां कुलेश्वरि ॥ ५७ ॥
न विधिर्न निषेधः स्यान्न पुण्यं न च[6] पातकम् ।
न स्वर्गो नैव नरकं कौलिकानां कुलेश्वरि ॥ ५८ ॥
अनभिज्ञा अभिज्ञन्ति दरिद्रा धनयन्ति च ।
विनष्टा अपि वर्द्धन्ते कौलिकाः कुलनायिके ॥ ५९ ॥
रिपवश्चापि मित्रन्ति साक्षाद्दासन्ति भूमिपाः ।
बान्धवन्ति जनाः सर्वे कौलिकानां कुलेश्वरि ॥ ६० ॥
विमुखाः सुमुखाः[7] सर्वे गर्विताः प्रणमन्ति च[8] ।
बाधकाः साधकायन्ते[9] कौलिकानां कुलेश्वरि ॥ ६१ ॥
निर्गुणाः सगुणायन्ते अकुलं सुकुलायते । *
अधमश्चापि धर्मन्ति कौलिकानां कुलेश्वरि ॥ ६२ ॥
मृत्युर्वैद्यायते देवि साक्षात् स्वर्गायते गृहम्[10] ।
पुण्यायन्तेऽङ्गनासङ्गाः[11] कौलिकानां कुलेश्वरि ॥ ६३ ॥

---

* क, ग, घ, ङ, पुस्तकेषु श्लोकोऽयं न दृश्यते ।
1. घ, सुखं भवेत् ; ङ आमिषाहारसौरभ्यहीनस्य न सुखं भवेत् ।
2. क, सर्वज्ञश्च ; ङ, स विज्ञेयः । 3. ख, स स्यात् ।
4. ख, स्त्वत्कार्यम् । 5. ङ कार्यमेव च । 6. ख, नात्र ।
7. क, घ, सुसुखाः ; ख, दुर्मुखाः सुमुखाः । 8. ख, प्रणता भुवि ।
9. क, साधका यान्ति ; ङ, बाधकाबाधका यान्ति ।
10. ङ, स्वर्गः साक्षाद् गृहायते । 11. ङ, ऽङ्गनाः सर्वाः ।

बहुनात्र किमुक्तेन कुलयोगीश्वराः प्रिये ।
सदा सङ्कल्पसिद्धाः स्युर्नात्र कार्या विचारणा ॥ ६४ ॥
येन केनापि वेशेन येन केनाप्यलक्षितः[1] ।
यत्र कुलाश्रमे तिष्ठेत् कुलयोगी कुलेश्वरि [2] ॥ ६५ ॥
योगिनो विविधैर्वेशैर्नराणां हितकारिणः ।
भ्रमन्ति पृथिवीमेतामविज्ञातस्वरूपिणः ॥ ६६ ॥
सकृन्नैवात्मविज्ञानं क्षपयन्ति कुलेश्वरि[3] ।
उन्मत्तमूकजडवन्निवसेल्लोकमध्यतः[4] ॥ ६७ ॥
अलक्ष्यो हि यथा लोके व्योम्नि चन्द्रार्कयोगतः[5] ।
नक्षत्राणां ग्रहाणाञ्च तथा वृत्तन्तु योगिनाम्[6] ॥ ६८ ॥
आकाशे पक्षिणां देवि जलेऽपि जलचारिणाम् ।
यथा गतिर्न दृश्येत तथा वृत्तं हि योगिनाम्[7] ॥ ६९ ॥
असन्त इव भाषन्ते चरन्त्यज्ञा[8] इव प्रिये ।
पामरा[9] इव दृश्यन्ते कुलयोग[10] विशारदाः ॥ ७० ॥
जना यथावमन्यन्ते गच्छेयुर्नैव[11] सङ्गतिम् ।
न किञ्चिदपि भाषन्ते तथा[12] योगी प्रवर्त्तते ॥ ७१ ॥
मुक्तो[13]ऽपि बालवत् क्रीडेत् कुलेशो जडवच्चरेत्[14] ।
वदेदुन्मत्तवद्विद्वान् कुलयोगी महेश्वरि* ॥ ७२ ॥

---

* क, ग, घ पुस्तकेषु श्लोकार्द्धमिदं न दृश्यते ।
1. ख, पि लक्षितः ।
2. ख, समातिष्ठेत् ; ङ गच्छन् कुलयोगी प्रवर्त्तते ।
3. ख, सत् कृत्वैवात्मविज्ञानं ख्यापयेत् कुलयोगवित् ।
4. ङ, लोकमध्यमे ।
5. ख, ग, अलक्ष्या हि यथा लोके व्योम्नि चन्द्रार्कयोर्गतिः ; ङ, चन्द्रार्कयोरिव ।
6. ङ, तथैव कुलयोगिनाम् । 7. ख, महात्मनाम् ।
8. ङ, वदन्त्यज्ञा । 9. ङ, पावका । 10. ङ, कुलयोगि ।
11. ङ, योगिनामेव । 12. ङ, ततो ।
13. ङ, लुब्धो । 14. ङ, जलवच्चरेत् ।

यथा हसति लोकोऽयं जुगुप्सति च कुत्सति[1] ।
विलोक्य दूरतो याति तथा[2] योगी प्रवर्त्तते ॥ ७३ ॥
क्वचिच्छिष्टः क्वचिद्भ्रष्टः[3] क्वचिद् भूतपिशाचवत् ।
नानावेशधरो योगी विचरेज्जगतीतले ॥ ७४ ॥
योगी लोकोपकाराय भोगान् भुङ्क्ते न काङ्क्षया[4] ।
अनुगृह्णन् जनान् सर्वान्[5] क्रीडेच्च पृथिवीतले ॥ ७५ ॥
सर्वशोषी[6] यथा सूर्यः सर्वभोगी यथाऽनलः ।
योगी भुक्त्वाखिलान्[7] भोगान् तथा पापैर्न लिप्यते ॥ ७६ ॥
सर्वस्पर्शी यथा वायुर्यथाकाशश्च सर्वगः ।
सर्वे यथा नदीस्नातास्तथा योगी सदा शुचिः ॥ ७७ ॥
यथा ग्रामगतं तोयं नदीयुक्तं भवेच्छुचि ।
तथा म्लेच्छगृहान्नादि योगिहस्तार्पितं शुचि[8] ॥ ७८ ॥
यथाऽऽचरन्ति देवेशि कुलज्ञानविशारदाः[9] ।
तदेव विदुषां मान्य[10]मात्मनो हितकाङ्क्षिणाम्* ॥ ७९ ॥
यस्मिंश्चरन्ति योगीशाः स मार्गः परमो मतः ।
यस्यामुदेति सूर्यो हि पूर्वाशा सा निगद्यते [11] ॥ ८० ॥
यत्र यत्र[12]गजो याति तत्र मार्गो यथा भवेत् ।
कुलयोगी चरेद् यत्र स स मार्गः[13] कुलेश्वरि ॥ ८१ ॥

---

* ङ पुस्तके श्लोकार्द्धमिदं नास्ति ।

1. ङ, कुत्सितः । 2. ङ, यथा । 3. ङ, क्वचिद्दुष्टः ।
4. क, ग, घ, लोकोपचाराय योगभञ्जनशङ्कया ।
5. ग, घ, नानुग्रहान् क्षमां सर्वां; ङ, अदन् गृह्णत् कुलान् सर्वान् ।
6. ङ, सर्वपायी । 7. क, भुक्त्वा कुलान् ।
8. ङ, न्नादिर्योगिहस्तगतः शुचिः ।
9. ख, कुलज्ञानपरायणाः; ङ, कुलधर्मपरायणाः ।
10. ग, घ, मार्गं । 11. ङ, स्यात् पूर्वाशा न तु दृश्यते ।
12. ख, ङ, यत्र मत्त । 13. ख, स सन्मार्गः ।

नदीं वक्रा[1]मृजुं कर्त्तुं निरोद्धुं तत्प्रवाहकम् ।
स्वेच्छाविहारिणं शान्तं को वा वारयितुं क्षमः ॥ ८२ ॥
यद्वन्मन्त्र[2]बलोपेतः क्रीडन्नीर्यैर्न[3] दृश्यते ।
तद्वन्न दृश्यते ज्ञानी क्रीडन्निन्द्रिय[4]पन्नगैः ॥ ८३ ॥
निवृत्तदुःखसन्तुष्टा[5] निर्द्वन्द्वा गतमत्सराः[6] ।
कुलज्ञानरताः[7] शान्तास्त्वद्भक्ता[8] स्ते च कौलिकाः ॥ ८४ ॥
अमदक्रोधदम्भाशाहङ्काराः सत्यवादिनः ।
कौलिकेन्द्रा ह्यचपला ये नेन्द्रिय[9]वशानुगाः ॥ ८५ ॥
कीर्त्यमाने कुले येषां[10] रोमाञ्चो गद्गदस्वरः ।
आनन्दाश्रु पतेद्देवि[11] कथिताः कौलिकोत्तमाः ॥ ८६ ॥
सर्वधर्माधिको लोके कुलधर्मः शिवोदितः ।
इति ये निश्चितधियः प्रोक्तास्ते कौलिकोत्तमाः ॥ ८७ ॥
यो भवेत् कुलतत्त्वज्ञः कुलशास्त्र[12]विशारदः ।
कुलार्चनरतः स स्यात् कौलिको नापरः प्रिये[13] ॥ ८८ ॥
कुलभक्तान् कुलज्ञानान् कुलाचारकुलव्रतान्[14] ।
प्रीतो भवति यो दृष्ट्वा कौलिकः स च मे प्रियः ॥ ८९ ॥
तत्त्वत्रयश्रीचरण[15]मूलमन्त्रार्थतत्त्ववित् ।
देवतागुरुभक्तश्च[16] कौलिकः स्याच्च दीक्षया[17] ॥ ९० ॥

---

1. ङ, नदीवक्र । 2. क, तत्तन्मन्त्र ; ङ, यदुन्मत्त ।
3. ग, घ, क्रीडन् सूर्यो ; ङ, क्रीडन् सर्वो न ।
4. ङ, योगी क्रीडन्नेन्द्रिय । 5. ङ, निवृत्तदुःखाः सन्तुष्टाः ।
6. क, ग, घ, विदुरागमवत्सलाः ।
7. क, ज्ञानज्ञानरताः । 8. ख, ङ, सद्भक्ता ।
9. ङ, जितेन्द्रिय । 10. ङ, तेषां ।
11. क, आनन्दश्चान्ततो देवि ; ङ, आनन्दाः प्रीणते देवि ।
12. ख, कुलागम ; ङ, कुलनाम ।
13. ख, ङ, दाम्भिकः परः । 14. ङ, कुले रतान् ।
15. ख, तत्त्वत्रयाभिचरण ; ग, घ, तत्त्वत्रयस्य स्वीकारात् ।
16. ङ, भक्तस्य । 17. ग, घ, शान्तदीक्षया ; ङ, कस्यानुदीक्षया ।

दुर्लभं सर्वलोकेषु कुलाचार्यस्य दर्शनम् ।
सुपाकेनैव पुण्यानां[1] लभ्यते नान्यथा प्रिये ॥ ९१ ॥
संस्मृतः कीर्त्तितो दृष्टो वन्दितो भाषितोऽपि वा ।
पुनाति कुलधर्मिष्ठश्चाण्डालोऽपि यदृच्छया ॥ ९२ ॥
सर्वज्ञो वापि मूर्खो वाप्युत्तमो वाऽधमोऽपि वा ।
यत्र देवि कुलज्ञानी तत्राहञ्च त्वया सह ॥ ९३ ॥
नाहं वसामि कैलासे न मेरौ न च मन्दरे[2] ।
कुलज्ञा यत्र तिष्ठन्ति तत्र तिष्ठामि भाविनि ॥ ९४ ॥
सुदूरमपि गन्तव्यं यत्र माहेश्वरो जनः ।
द्रष्टव्यञ्च प्रयत्नेन तत्र सन्निहितो ह्यहम्[3] ॥ ९५ ॥
अतिदूरस्थितो वापि द्रष्टव्यः कुलदेशिकः[4] ।
समीपे वर्त्तमानोऽपि न द्रष्टव्यः पशुः प्रिये ॥ ९६ ॥
कुलज्ञानी वसेद् यत्र[5] स देशः पुण्यभाक् ततः[6] ।
दर्शनादर्चनात्तस्य त्रिसप्तकुलमुद्धरेत् ॥ ९७ ॥
कुलज्ञानिनमालोक्य स्वसन्तान[7]गृहे स्थितम् ।
शंसन्ति पितरस्तस्य[8] यास्यामः परमां गतिम् ॥ ९८ ॥
समाश्वसन्ति[9] पितरः सुवृष्टिमिव[10] कर्षकाः ।
योऽस्मत्कुलेषु पुत्रो वा पौत्रो वा कौलिको भवेत् ॥ ९९ ॥
स धन्यः खलु लोकेऽस्मिन् पुरुषः क्षीणकल्मषः ।
यत्समीपं[11] समायान्ति कुलाचार्या मुदा प्रिये ॥ १०० ॥
कौलिकेन्द्रे समायाते कौलिकावसथं प्रति ।
समायान्ति मुदा देवि योगिन्यो योगिभिः सह ॥ १०१ ॥

---

1. ङ, विपाकेनैव प्रभूणां ।
2. घ, ङ, मन्दिरे ।
3. ङ, त्वं नन्दिता ह्यहम् ।
4. क, ग, कुलनायकः ।
5. ङ, भवेद् यत्र ।
6. ङ, पुण्यभाजनः ।
7. क, स्वयं वान्य ; ङ, स्वसन्तानं ।
8. क, नृत्यन्ति पितरः सर्वे ।
9. क, समाश्रुवन्ति ; ड, समाश्रयन्ति ।
10. ङ, स्ववृष्टिमिव ।
11. ङ, मत्समीपं ।

प्रविश्य कुलयोगीन्द्रं भजन्ते[1] पितृदेवताः ।
तस्मात् सम्पूजयेद्भक्त्या कुलज्ञानपरायणान्[2] ॥ १०२ ॥
अभ्यर्चयित्वा त्वां देवि त्वद्भक्तान्नार्चयन्ति ये ।
पापिष्ठास्त्वत्प्रसादस्य भाजनं न भवन्ति ते ॥ १०३ ॥
नैवेद्यं पुरतो न्यस्तं दर्शनात् स्वीकृतं त्वया[3] ।
रसान्[4] भक्तस्य जिह्वाग्रादश्नामि कमलेक्षणे ॥ १०४ ॥
त्वद्भक्तपूजनाद्देवि पूजितोऽहं न संशयः ।
तस्मान्मम[5] प्रियाकाङ्क्षी त्वद्भक्तानेव पूजयेत् ॥ १०५ ॥
यत् कृतं कुलनिष्ठानां[6] तद्देवानां कृतं भवेत् ।
सुराः कुलप्रियाः सर्वे तस्मात् कौलिकमर्चयेत् ॥ १०६ ॥
न तुष्याम्यहमन्यत्र तथा भक्त्या सुपूजितः ।
कौलिकेन्द्रेऽर्चिते सम्यक् यथा तुष्यामि पार्वति ॥ १०७ ॥
यत् फलं कौलिकेन्द्राणां पूजया लभते प्रिये । *
तत् फलं नाप्नुयात्तीर्थतपोदानमखव्रतैः ॥ १०८ ॥
दत्तमिष्टं हुतं तप्तं पूजितं जप्तमम्बिके[7] ।
कौलिकस्य भवेद्व्यर्थं कुलज्ञं योऽवमानयेत् ॥ १०९ ॥
श्मशानं तद् गृहं[8] देवि स पापी श्वपचाधमः ।
यः प्रविश्य कुलं धर्म कुलाचारं न वेत्ति चेत् ॥ ११० ॥
कुलनिष्ठान् परित्यज्य यच्चान्यस्मै प्रदीयते ।
तद्दानं निष्फलं देवि दाता च नरकं व्रजेत् ॥ १११ ॥
भिन्नभाण्डे जलं यद्वत् शिलायामुप्तबीजवत् ।
भस्मनीव हुतं हव्यं तद्वद्दानमकौलिके ॥ ११२ ॥

---

* ङ पुस्तके श्लोकार्द्धमिदं नास्ति ।

1. क, ग, भुज्यन्ते ।
2. ङ, रतान् परान् ।
3. ख, ङ, दृष्ट्वैव स्वीकृतं मया ।
4. ङ, साधु ।
5. ङ, तस्मान्न मत् ।
6. ङ, कुलशिष्याणाम् ।
7. ख, यत्तदम्बिके ।
8. ङ, तद्गृहे ।

यथाशक्त्या तु यत् किञ्चिद् यो दद्यात् कुलयोगिने ।
विशेषतिथिषु[1] प्रीत्या तत्फलं नैव वर्ण्यते ॥ ११३ ॥
यो देवि स्वयमाहूय कुलज्ञानान् शुभे[2] दिने ।
अभ्यर्च्य देवताबुद्ध्या गन्धपुष्पाक्षतादिभिः ॥ ११४ ॥
मादिभिः पञ्चमुद्राभिः सद्भक्त्या परितोषयेत् ।
तेषु तुष्टेष्वहं तुष्टस्तुष्टाः स्युः सर्वदेवताः ॥ ११५ ॥
भगिनीं वा सुतां भार्यां यो दद्यात् कुलयोगिने ।
मधुमत्ताय देवेशि तस्य पुण्यं न गण्यते ॥ ११६ ॥
अनिखात[3]विनिक्षिप्तमप्रयत्नेन वर्द्धितम् ।
परलोकस्य पाथेयं वीरचक्रेऽर्पितं[4] मधु ॥ ११७ ॥
पापाचारसमायुक्तं सर्वलोकबहिष्कृतम् ।
जायते हि कुलद्रव्यं कुलयोगीश्वरार्पितम् ॥ ११८ ॥
यस्मिन् देशे वसेत्[5] वीरः कुलपूजारतः प्रिये ।
सोऽपि देशो भवेत् पूतः[6]किं पुनस्तत्पुरस्थिताः[7] ॥ ११९ ॥
कौलिकेन्द्रे सकृद्भुक्ते[8] पुण्यं कोटिगुणं भवेत् ।
किं पुनर्बहुभिर्भुक्तैस्तत् पुण्यं नैव गण्यते ॥ १२० ॥
तस्मात् सर्वप्रयत्नेन सर्वावस्थासु सर्वदा ।
कुलधर्मरतो[9] भूयात् कुलज्ञानिनमर्चयेत् ॥ १२१ ॥
ज्ञानिनोऽज्ञानिनो वापि यावत् देहस्य धारणा ।
तावद्वर्णाश्रमाचारः[10] कर्त्तव्यः कर्ममुक्तये[11] ॥ १२२ ॥

---

1. ङ, विशेषतीर्थेषु । 2. ङ, सुखमाहूय कुलज्ञानशुभे ।
3. क, अनिवात ; ग, अलिबिन्दु ।
4. ख, वीरैर्वा चर्चितं : ङ, वीरचक्रार्पितम् । 5. ङ, वसे ।
6. क, ग, पुण्यः ; ङ, पूज्यः । 7. ङ, स्वपुरस्थितः ।
8. ङ, कौलिको यः सकृद्भुङ्क्ते । 9. ख, कुलज्ञानरतो ।
10. क, ग, वर्णसमाचारः ङ, तत्तद्वर्णाश्रमाचारः ।
11. ख, कर्मभुक्तये ; ङ, सर्वमुक्तये ।

कर्मणोन्मूलितेऽज्ञाने[1] ज्ञानेन शिवतां[2] व्रजेत् ।
शिवे तेनैव[3] मुक्तिः स्यादतः कर्म समाचरेत् ॥ १२३ ॥
कुर्यादनिन्द्यकर्माणि नित्यकर्माणि वा चरेत्[4] ।*
कर्ममुक्तः सुखाकाङ्क्षी कर्मनिष्ठः सुखं व्रजेत्[5] ॥ १२४ ॥
सर्वकर्माणि संत्यक्तुं न शक्यं देहधारिणा ।
त्यजेत् कर्मफलं यो वा स त्यागीत्यभिधीयते ॥ १२५ ॥
स्वकार्येषु प्रवर्त्तन्ते करणानीति चिन्तयेत् ।
अहम्भावमपास्यैव यः कुर्यात् स न लिप्यते ॥ १२६ ॥
क्रियमाणानि कर्माणि ज्ञानप्राप्तेरनन्तरम् ।
न च स्पृशन्ति तत्त्वज्ञं जलं पद्मदलं यथा ॥ १२७ ॥
तन्निष्ठस्य च कर्माणि पुण्यापुण्यानि संक्षयम् ।
प्रयान्ति नैव लिप्यन्ते क्रियमाणानि वा पुनः[6] ॥ १२८ ॥
उत्पन्न[7]सहजानन्दतत्त्वज्ञानरतः प्रिये ।
संत्यक्तसर्वसङ्कल्पः स विद्वान् कर्म सन्त्यजेत् ॥ १२९ ॥
वृथैव[8] यैः परित्यक्तं कर्मकाण्डमपण्डितैः ।
पाषण्डाः पण्डितम्मन्यास्ते यान्ति नरकं प्रिये ॥ १३० ॥
फलं[9] प्राप्य यथा वृक्षः पुष्पं[10] त्यजति निस्पृहः ।
तत्त्वं प्राप्य तथा योगी त्यजेत् कर्मपरिग्रहम् ॥ १३१ ॥

---

* ङ पुस्तके श्लोकार्द्धमिदं न दृश्यते ।

1. क, ग, कर्मणा मीलितं ज्ञानं ; ख, कर्मणोन्मूलितं ज्ञानम् ।
2. क, ग, समताम् ।
3. ख, शिवैक्यमेव ; ङ, शिवैक्यस्यैव ।
4. ख, नाचरेत् ।
5. क, ग, इहामुत्र फलाकाङ्क्षी कः कुतः स्यात् सुरप्रिये ; ख, कण्ठस्तासु वपि प्रिये ।
6. क, ग, क्रियामतति वायुना ; ङ, क्रियमाणानि चाधुना ।
7. ङ, तत्पन्न ।
8. ख, यथैव ।
9. ख, रौद्रं ; ङ, ऋतुं ।
10. ख, ङ, पत्रं ।

अश्वमेधायुतेनापि ब्रह्महत्यायुतेन च ।
पुण्यपापैर्न लिप्यन्ते येषां ब्रह्म हृदि स्थितम् ॥ १३२ ॥
पृथिव्यां यानि कर्माणि जिह्वोपस्थनिमित्ततः[1] ।
जिह्वोपस्थपरित्यागी कर्मणा किं करिष्यति ॥ १३३ ॥
इति ते कथितं किञ्चित् योगं योगीश[2]लक्षणम् ।
समासेन कुलेशानि किं भूयः श्रोतुमिच्छसि ॥ १३४ ॥

इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये
सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चम-
खण्डे ऊर्ध्वाम्नायतन्त्रे योगसंस्थापनकथनं
नाम नवम उल्लासः ॥ ९ ॥

---

1. ख, ङ, निमित्तकं ।  2. क, ङ, योगयोगीश ।

# दशम उल्लासः ।

श्रीदेव्युवाच ।

कुलेश श्रोतुमिच्छामि विशेषदिवसार्चनम् ।
तत्सपर्या[1]फलं देव वद मे परमेश्वर ॥ १ ॥

ईश्वर उवाच ।

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥ २ ॥
उत्तमा नित्यपूजा स्यात् मध्यमं पर्वपूजनम्[2] ।
मासपूजाऽधमा देवि मासादूर्ध्वं पशुर्भवेत्[3] ॥ ३ ॥
विहितैर्मादिभिर्द्रव्यैर्मासादूर्ध्वं समर्चनम्[4]* ।
पशोर्भूयः प्रवेशेच्छा[5] यदि स्याद्दीक्षयेत् पुनः ॥ ४ ॥
मद्यं मांसञ्च मत्स्यश्च मुद्रा मैथुनमेव च ।
मकारपञ्चकं[6] देवि देवताप्रीतिकारकम्[7] ॥ ५ ॥
मादिपञ्चकमीशानि देवताप्रीतये सुधीः ।
यथाविधि निषेवेत तृष्णया चेत् स पातकी ॥ ६ ॥
कृष्णाष्टमीचतुर्द्दश्यावमावास्याथ पूर्णिमा ।
संक्रान्तिः पञ्च पर्वाणि[8] तेषु पुण्यदिनेषु च ॥ ७ ॥
गुरुजन्मदिने प्राप्ते तद्गुरोस्तद्गुरोरपि ।
मानवौघादिपुंसाञ्च[9] स्वजन्मदिवसे तथा ॥ ८ ॥

---

* ख पुस्तके श्लोकोऽयं न दृश्यते ।

1. ङ, तस्य पूजा ।
2. ङ, पर्वपूजा तु मध्यमा ।
3. ङ, बहिर्भवेत् ।
4. क, ग, घ, समर्चयेत् ।
5. ग, घ, पशुर्भूयात् परे स्वेच्छा ।
6. ङ, मकारपञ्चमं ।
7. ख, ङ, कारणं ।
8. ख, पर्वसर्वेषु ।
9. ङ, पूजाञ्च ।

सम्पत्तौ च यजेल्लाभे तपोदीक्षाव्रतोत्सवे[1] *।
पीठोपगमने[2] वीरपीठे स्वजनदर्शने ॥ ९ ॥
देशिकागमने पुण्यतीर्थदैवतदर्शने।
एवमादिषु देवेशि विशेषदिवसेषु च ॥ १० ॥
यथाधनं[3] यथाश्रद्धं यथाद्रव्यं यथोचितम्।
यथाकालं यथादेशं तथा पूजां समाचरेत् ॥ ११ ॥
आचार्येण विधानेन[4] कारयेच्चक्रपूजनम्[5]।
स्वयं वा पूजयेद्देवि बिन्दुपूजापुरःसरम्[6] ॥ १२ ॥
स ते लोकमवाप्नोति पुनरावृत्तिवर्जितम्[7]।
अकुर्वन्[8] कौलिको मोहाद्देवताशापमाप्नुयात् ॥ १३ ॥
मासे वापि त्रिमासे वा[9] षण्मासे वत्सरेऽपि वा।
श्रीगुरुं पूजयेद्भक्त्याऽप्राप्ते तत्स्त्रीसुतादिकान्[10] ॥ १४ ॥
तदभावे कुलज्ञञ्च[11] तच्छिष्यं वान्ययोगिनम्।
सन्तोषयेत् कुलद्रव्यैः कुलपूजापुरःसरम्[12] ॥ १५ ॥
रोगेष्वापत्सु दोषेषु[13] दुःसङ्गे दुर्निमित्तके।
पूजयेद् योगिनीवृन्दं देवि तद्दोषशान्तये ॥ १६ ॥
यत्रैकाम्नायतत्त्वज्ञः कुलाचार्यः कुलेश्वरि †।
कौलिकास्त्रिचतुःपञ्च शक्तयश्च तथा प्रिये ॥ १७ ॥

---

* ग, ङ पुस्तकयोः सम्पत्तावित्यारभ्य विशेषदिवसेषु चेत्यन्तं श्लोकद्वयं नास्ति।

† क पुस्तके श्लोकोऽयं न दृश्यते।

1. क, व्रते शुभे। 2. क, पीठोपरिगमे। 3. ख, ङ, यथाबलं।
4. ङ, णाथवान्येन। 5. ख, चक्रमर्चनं। 6. क, परायणः।
7. ङ, सत्यलोकमवाप्नोति पुनरावृत्तिवर्जितः।
8. ख, न कुर्यात्; ङ, अकृत्वा।
9. ङ, द्विमासे वा। 10. ङ, व्याप्तञ्च स्त्रीसुतादिभिः।
11. ख, ग, तत्कुलीनं।
12. क, ग, चक्रराजपुरःसरं; ख, चक्रपूजापुरःसरं।
13. ख, घोरेषु।

पृथग्वा पूजयेद्देवि मिथुनाकारतोऽपि वा ।
गन्धपुष्पाक्षताद्यैस्तु देवेशि समलङ्कृताः ।
भक्ष्यभोज्यादिपिशितैः पदार्थैः षड्रसान्वितैः ॥ १८ ॥
प्रौढोल्लासेन सहिता यदि ता[1] निवसन्ति च ।
तच्छ्रीचक्रमिति प्रोक्तं वृन्दञ्चापि तदुच्यते ॥ १९ ॥
कुर्यान्नव[2]कुमारीणां पूजामाश्विनमासके[3] ।
प्रातर्निमन्त्रयेद्भक्त्या[4] साधकः शुद्धमानसः ॥ २० ॥
मनोहरामेकवर्षां बालाञ्च शुभलक्षणाम् ।
मन्त्री स्नात्वाथ शुद्धात्मा कुर्याद्देवि[5] क्रमार्चनम् ॥ २१ ॥
अभ्यङ्गस्नानशुद्धान्तां पूजासदनमानयेत्[6] ।
देवतासन्निधौ बालामुपवेश्य समर्चयेत् ॥ २२ ॥
गन्धपुष्पादिभिर्धूपैर्दीपैश्च कुलदीपकैः[7] ।
भोग्यभोज्यान्नपानाद्यैः[8] क्षीराज्यमधुमांसकैः ।
कदलीनारिकेलादिफलैस्तां परितोषयेत् ॥ २३ ॥
सशक्तिकः स्वयं देवि प्रौढान्तोल्लाससंयुतः[9] ।
यथाशक्ति जपेदेकोत्तरवृद्ध्या[10]ऽथवा मनुम्[11] ॥ २४ ॥
बालामलङ्कृतां पश्यन्[12] चिन्तयेत् स्वेष्टदेवताम् ।
ततस्तां देवताबुद्ध्या नमस्कृत्य विसर्जयेत् ॥ २५ ॥
द्वितीयायां द्विवर्षान्ता[13]मेकवर्षाञ्च पूजयेत्[14] ।
एवं तिथौ कुमारीञ्च यजेत् पूर्वदिनार्चिताम् ॥ २६ ॥

---

1. ङ, प्रौढान्तोल्लासमुदिता हसन्ति ।
2. क, कुर्याद्वर । 3. ङ, कुर्यान्न बद्धमारीणां पूजां मद्याजमांसकैः ।
4. ङ, तं तं निमन्त्रयेद्भक्त्या ।
5. ङ, कृत्वा देवि । 6. ङ, पूजास्थानं समानयेत् ।
7. क, ग, कदलीफलैः । 8. ङ, भक्ष्यते भोज्यपानैश्च ।
9. ख, यौवनोल्लाससंयुतः; ङ, अविपक्षः स्वयं देवि यौवनोल्लास-संयुतः ।
10. क, ग, बुद्ध्या । 11. ङ, मन्त्री बुद्ध्यावधिर्मनुं ।
12. ङ, पश्चात् । 13. ङ, द्विवर्षीया । 14. क, वर्जयेत् ।

नवम्यामेकवर्षादिनववर्षान्तकन्यकाः ।
बाला शुद्धा च ललिता मालिनी च वसुन्धरा[1] ।
सरस्वती रमा गौरी दुर्गा च नव कीर्त्तिताः ॥ २७ ॥
तिताराद्यैर्नमोऽन्तैश्च देवतापदपश्चिमैः ।
नामभिश्च चतुर्थ्यन्तैः[2] पूजयेत्ताः[3] पृथक् पृथक् ॥ २८ ॥
वटुकं पञ्चवर्षञ्च नववर्षं गणेश्वरम्[4]* ।
गन्धपुष्पाम्बरा[5]कल्पैर्यथाविभवविस्तरैः ॥ २९ ॥
अभ्यर्च्य देवताबुद्ध्या पदार्थैः परितोषयेत् ।
स्वकार्यफलसिद्ध्यर्थं वित्तशाठ्यविवर्जितः ॥ 30 ॥
नवरात्रं जपेदेकोत्तरवृद्ध्या क्रमेण च[6] ।
नवरात्रकृतां पूजां देवि देव्यै[7] समर्पयेत् ॥ 31 ॥
ताम्बूलं दक्षिणां दत्त्वा कुमारीस्ता विसर्जयेत् ।
एवं नवकुमारीणामर्चनं प्रतिवत्सरम् ॥ 3२ ॥
यः करोति स पुण्यात्मा देवताप्रीतिमाप्नुयात्[8] ।
मनोऽभिलाषं सम्प्राप्य निवसेत्तव सन्निधौ ॥ 33 ॥
अथवा यौवनारूढाः प्रमदा नव[9] पार्वति ।
मनोज्ञाः पूजयेद्भक्त्या[10] नवरात्रिषु मन्त्रवित् ॥ 3४ ॥
हृल्लेखां गगनां रक्तां महोच्छुष्मां[11] करालिकाम् ।
इच्छां ज्ञानां क्रियां दुर्गां वटुकञ्च गणेश्वरम् ।
पूर्ववत् पूर्वमद्याद्यैः[12] पदार्थैः परितोषयेत् ॥ 3५ ॥

---

* श्लोकार्द्धमिदं ङ पुस्तके नास्ति ।

1. क, सुसुन्दरा; ङ, सरस्वती रमा गौरी दुर्गा चन्द्रमुखी तथा। हरप्रिया उमा भीमा शान्ता च नव कीर्त्तिताः ।

2. ख, नवभिः सचतुर्थ्यन्तैः ।

3. ड, पूजयेच्च। 4. क, कुलेश्वरम् । 5. क, ग, पुष्पाक्षता।

6. ङ, देव तत्तद्वृत्तिक्रमेण च । 7. ङ, सिद्ध्यै ।

8. ड, देवीप्रीतिमवाप्नुयात् । 9. ड, यदि ।

10 ड, पूजिता भक्त्या । 11. ड, महोत्तुण्डां ।

12. क, ग, पूज्यमानाद्यैः ; ङ, पूर्ववदापूज्यमानैः ।

प्रौढान्तोल्लाससंयुक्ताः सन्तुष्टा यदि ताः[1] प्रिये ।
साधकस्तुष्टि[2]मासाद्य निवसेत्तव सन्निधौ ॥ ३६ ॥
एवं यः पूजयेद्देवि प्रतिवर्षं यतव्रतः ।
षण्मासे वा त्रिमासे वा मासे मासेऽथवा[3] प्रिये ॥ ३७ ॥
तिस्रो वा पञ्च वा सप्त[4] पूजयेद्देवताधिया ।
सर्वैश्वर्यसमृद्धात्मा स भवेदावयोः प्रियः ॥ ३८ ॥
भृगुवारे कुलेशानि कान्तामारूढयौवनाम् ।
सर्वलक्षणसम्पन्नामनुकूलां[5] मनोरमाम् ॥ ३९ ॥
कुलाकुलाष्टकां देवि[6] निमन्त्र्याहूय पुष्पिणीम् ।
अभ्यङ्ग[7]स्नानशुद्धाङ्गीमासने चोपवेशयेत् ॥ ४० ॥
गन्धपुष्पाम्बरा[8]कल्पैरलङ्कृत्य विधानवित् ।
आत्मानं गन्धपुष्पाद्यैरलङ्कुर्यात् कुलेश्वरि ॥ ४१ ॥
आवाह्य देवतां तस्यां यजेन्न्यासक्रमेण च[9] ।
कृत्वा क्रमार्चनं धूपदीपाञ्च कुलदीपकान्[10] ॥ ४२ ॥
प्रदर्श्य देवताबुद्ध्या पदार्थैः षड्रसान्वितैः ।
मांसादिभक्ष्यभोज्याद्यैस्तोषयेद्देवि[11] भक्तितः ॥ ४३ ॥
प्रौढान्तोल्लाससहितां तां प्रपश्यन् जपेन्मनुम् ।
यौवनोल्लाससहितः स्वयं तद्ध्यानतत्परः[12] ॥ ४४ ॥
निर्विकारेण चित्तेन ह्यष्टोत्तरसहस्रकम् ।
जपादिकं समर्प्याथ तया सह निशां नयेत् ॥ ४५ ॥
त्रिपञ्चसप्त[13]नवसु भृगुवारेषु यः प्रिये ।
पूजयेद्विधिनाऽनेन तस्य पुण्यं न गण्यते ॥ ४६ ॥

---

1. ग, ङ, चेत् । 2. क, ग, स्तिथि । 3. ङ, मासे चैवाथवा ।
4. ङ, पञ्चमासाद्यैः । 5. ङ, मन्दहासां ।
6. ख, ङ, वापि । 7. क, शोभनां ।
8. ख, क्षता । 9. ङ, तत्स्थां यजेन्मासक्रमेण च ।
10. ङ, कृत्वार्चनं धूपदीपं पुष्पाद्यं कुलदीपकं । 11. ख, ङ, दति ।
12. क, कुर्याद्विचक्षणः । 13. क, ग, घ, त्रिसप्तपञ्च ।

चतुःपीठार्चनफलं स प्राप्नोति कुलेश्वरि[1]* ।
यद् यत् स्वमनसोऽभीष्टं तत्तदाप्नोत्यसंशयम्[2] ॥ ४७ ॥
नवम्यां वार्चयेद्देवं[3] विधानेन विधानवित् ।
स्तोत्रैः संपूजयेत्[4] सर्वैर्महदैश्वर्यमाप्नुयात् ॥ ४८ ॥
कुर्यात् कर्कटके[5] वापि मकरे मिथुनार्चनम् ।
तुलायां सिंह[6]मेषे वा सर्वसंक्रान्तिषु प्रिये ॥ ४९ ॥
गौरीशिवौ रमाविष्णू वाणीसरसिजासनौ ।
शचीन्द्रौ रोहिणीचन्द्रौ स्वाहाग्नी च प्रभारवी ॥ ५० ॥
भद्रकालीवीरभद्रौ भैरवीभैरवावपि ।
मिथुनानि नवाभ्यर्च्य[7] पूर्वोक्तेनैव वर्त्मना ॥ ५१ ॥
त्रितारादिनमोऽन्तेन तत्तन्नाम्ना विधानवित् ।
गन्धपुष्पादिभिः पूज्य मद्याद्यैः[8] परितोषयेत् ॥ ५२ ॥
प्रौढान्तोल्लासयुक्तानि कुर्वीत मिथुनानि च ।
एवं कृते न सन्देहस्तुष्टा मिथुनदेवताः ।
अनुगृह्णन्ति तं[9] देवि प्रयच्छन्ति मनोरथम् ॥ ५३ ॥
प्रतिवर्षन्तु यः कुर्यात् सभक्त्या मिथुनार्चनम्[10] ।
तव लोके स[11] निवसेत् सर्वैश्वर्यसमन्वितः ॥ ५४ ॥
अथ वैशाखमासस्य शुक्लप्रतिपदीश्वरि ।
ब्राह्मे मुहूर्त्ते उत्थाय स्नानं सन्ध्यामुपास्य च ॥ ५५ ॥

---

* ख पुस्तके श्लोकार्द्धमिदं नास्ति ।
1. ङ, समं प्राप्नोत्यसंशयम् ।
2. ङ, यद् यदस्य मनोऽभीष्टं तत्तदाप्नोत्यशेषतः ।
3. ख, द्देवि ; ग, द्देवी ।
4. ख, मन्त्री च पूज्यते ; ङ, स्तोत्रैश्च जप्यते ।
5. ङ, मीनेऽथ कर्कटे ।
6. ख, तुलायाम्वाथ ।
7. क, ग, घ, मधुमांसानि भोज्याद्यैः ।
8. ङ, पूज्या इत्याद्यैः ।
9. क, ग, घ, ते ; ख, ता ।
10. ख, सद्भक्त्या मिथुनार्चनम् ; ङ, कुर्याद्भक्त्या मिथुनपूजनम् ।
11. क, ग, घ, त

मनोज्ञे रहसि स्थाने पूर्वाशाभिमुखस्थितः ।
आत्मानं गन्धपुष्पाद्यैरलङ्कृत्य विधानवित्[1]* ॥ ५६ ॥
कृत्वा पुरोदितन्यासान् देवताभावमास्थितः[2] ।
किञ्चिदभ्युदिते सूर्ये मण्डले[3] स्वेष्टदेवताम् ॥ ५७ ॥
ध्यात्वा सावरणां सम्यक् पूजयेद्विधिना प्रिये ।
षोडशैरुपचारैस्तु चक्रपूजापुरःसरम् ॥ ५८ ॥
कुलदीपान् प्रदर्श्याथ शिवाय गुरुरूपिणे ।
मत्स्यमांसादि विधिवद्भक्ष्यभोज्यसमन्वितम् ॥ ५९ ॥
अर्घ्यं निवेद्य तच्छेषं स्वयं भक्त्या पिबेत् प्रिये[4] ।
यौवनोल्लाससहितो निर्विकारेण[5] चेतसा ॥ ६० ॥
ध्यायंस्तन्मण्डलं देवीमष्टोत्तर[6]सहस्रकम् ।
जप्त्वा समर्प्य तत्पूजां देवताञ्च समुद्धरेत्[7] ॥ ६१ ॥
एवं शुक्लप्रतिपदं[8] समारभ्य दिने[9] दिने ।
कुर्याज्जपार्चनं कृष्णचतुर्दश्यन्तमम्बिके ॥ ६२ ॥
अमावस्यादिने देवि[10] पूजयेच्छक्तिकौलिकान् ।
त्रिपञ्चसप्त[11]नव वा वित्तलोभविवर्जितः ॥ ६३ ॥
एवं यो मासमात्रन्तु कुर्यात् सूर्योदयार्चनम् ।
देवता तस्य सन्तुष्टा ददाति फल[12]मीप्सितम् ॥ ६४ ॥
मध्याह्ने चार्चयेद्देवं[13] सायाह्ने चार्चयेत्[14] प्रिये ।
स तु तत्फलमाप्नोति योगिनीनां प्रियो भवेत् ॥ ६५ ॥

---

* ग पुस्तके श्लोकोऽयं न दृश्यते ।
1. ङ, विधानतः ।
2. ङ, माश्रितः । 3. ख, यौवने ।
4. क, भक्त्या पिबेत् सदा ; ख, ङ, शक्त्या सह ।
5. ख, ङ, निर्विकल्पेन । 6. ख, स्तनमण्डले देवि अष्टोत्तर ।
7. ख, समुद्धिसेत् ।
8. ङ, प्रतिपदि । 9. ङ, शुभे । 10. ङ, वापि ।
11. क, ग, घ, त्रिसप्तपञ्च । 12. ङ, पद ।
13. ङ, वार्चनं देवं । 14. वार्चयेत् ।

त्रिसन्ध्यां योऽर्चयेदेवं[1] मासमात्रं विधानवित्[2] ।
काङ्क्षितां लभते सिद्धिं देववद्विचरेद् भुवि ॥ ६६ ॥
माघशुक्लप्रतिपदि दिवाहारविवर्जितः ।
स्नात्वा[3] शुक्लाम्बरधरः सायं सन्ध्यामुपास्य च ॥ ६७ ॥
सूर्यार्चनोक्त[4]मार्गेण सर्वद्रव्यसमन्वितः ।
यौवनोल्लाससहितश्चन्द्रस्थां[5] देवतां स्मरन् ॥ ६८ ॥
चन्द्रास्तमयपर्यन्तं जपेन्मन्त्रमनन्यधीः ।
एवं प्रतिदिनं शुक्लचतुर्दश्यन्तमर्चयेत् ॥ ६९ ॥
पौर्णमास्यां यथाशक्त्या पूजयेच्छक्तिकौलिकान् ।
एवं यः कुरुते भक्त्या शुक्लपक्षार्चनं प्रिये ॥ ७० ॥
सर्व पाप[6]विशुद्धात्मा सर्वैश्वर्यसमन्वितः ।
सर्वलोकैकसंपूज्यः शिववन्निवसेद् भुवि[7] ॥ ७१ ॥
शुक्लपक्षेऽर्चनं यद्वत्तद्वत् पक्षे सितेतरे ।
यः करोति विधानेन सर्वान् कामान् समश्नुते ॥ ७२ ॥
इह भुक्त्वाऽखिलान् भोगान् देववत्[8] प्रियदर्शनः ।
योगिनीवीरमेलनं लभते नात्र संशयः ॥ ७३ ॥
अथ कार्त्तिकमासस्य शुक्लप्रतिपदीश्वरि ।
स्नात्वाचम्य[9] विशुद्धात्मा न्यासान् कृत्वा पुरोदितान् ॥ ७४ ॥
प्रसुप्ते जीवलोके तु मुदितात्मा महानिशि ।
पूर्वार्चनोक्त[10] विधिना सर्वद्रव्यसमन्वितः ॥ ७५ ॥
आज्येनानामिकास्थूल[11]वर्त्ति प्रज्वाल्य पार्वति ।
पञ्चवर्णरजश्चित्रवसुपत्रसरोरुहे ॥ ७६ ॥

---

1. ख, ङ, द्देवं । 2. ख, ङ, विधानतः ।
3. ङ, स्नातः । 4. ङ, पूर्वोक्तेनैव ।
5. ख, स्तत्रस्थां ; ड, चिद्रूपां । 6. ङ, सर्वभाव ।
7. ग, द्विहरेद् भुवि ; ङ, सर्वलोकैकपूज्यश्च निवसेच्छिवसन्निधौ ।
8. क, देवता । 9. ख, स्नात्वोपोष्य ; स्नात्वोपास्य ।
10. ख, घ, सूर्यार्चनोक्त । 11. क, ग, घ, नानामिकाङ्गुष्ठे ।

मधुपूर्णे च कलसे कांस्यपात्रे मनोहरे ।
दीपं संस्थाप्य पुरत उत्तराभिमुखस्थितः ॥ ७७ ॥
दीपे[1] सावरणां देवीं ध्यात्वा विधिवदर्चयेत् ।
यौवनोल्लाससहितो[2] दीपस्थां देवतां स्मरन् ॥ ७८ ॥
अष्टोत्तरसहस्रन्तु जपेन्मन्त्रमनन्यधीः ।
एवं समर्चयेत् कृष्णचतुर्दश्यन्तमम्बिके ॥ ७९ ॥
अमावास्यादिने भक्त्या पूजयेच्छक्तिकौलिकान्[3] ।
एवं कृते कुलेशानि देवता प्रीतिमाप्नुयात् ॥ ८० ॥
सर्वकामसमृद्धात्मा[4] सर्वैश्वर्यसमन्वितः ।
सर्वलोकैकसम्मान्यः सञ्चरेत् स यथासुखम् ॥ ८१ ॥
अष्टाष्टकार्चनं कुर्यात् शक्तश्चेदेकवासरे[5] ।
अथवाष्टाष्टदिवसेष्वथ[6] द्व्यष्टदिनेषु वा ।
द्वात्रिंशद्दिवसेष्वेवं चतुःषष्टि[7]दिनेषु च ॥ ८२ ॥
गुरुणा कारयेद्देवि क्रमज्ञेनापरेण[8] वा ।
क्रमज्ञश्चेत् स्वयं कुर्याद्वित्तशाठ्यविवर्जितः ॥ ८३ ॥
मूलाष्टकन्तु ब्रह्माद्या[9]श्चासिताङ्गादिभैरवाः ।
मङ्गलाद्यैश्च मिथुने[10]रष्टभिः शब्दिताः[11] प्रिये ॥ ८४ ॥
मूलाष्टकोद्भवानीति प्रसिद्धानि[12] कुलागमे ।
अक्षोभ्यादि[13]चतुःषष्टिमिथुनानि समर्चयेत् ॥ ८५ ॥

---

1. क, दीपैः ; ग, घ, दीप । 2. क, यौवनोल्लाससहितां ।
3. ङ, पूजयेत् कुलशक्तिकान् । 4. ङ, सर्वपापविशुद्धात्मा ।
5. ङ, शक्त्या चोक्ते च वासरे ।
6. ख, अथवाष्टदिनेष्वेवाथवा ; ङ, अथवाष्टदिनेष्वेवमथ ।
7. ख, पञ्चषष्टि । 8. ङ, नाग्रगेण ।
9. क, घ, ब्राह्मयाद्या । 10. क, ग, निपुणे ।
11. ग, शक्तिभिः ; ङ, सहिताः ।
12. क, ङ, मूलाष्टको भवानीति प्रसिद्धं हि ।
13. क, अष्टम्याद्ये ; ग, घ, अष्टमाद्यैः ; ङ, अहोरात्रं ।

पूर्वोक्तेन विधानेन यथाविभवविस्तरम्[1] ।
क्रमलोपं न कुर्वीत स्वेष्टकार्यर्थिसिद्धये[2] ॥ ८६ ॥
गन्धपुष्पाक्षताद्यैश्च[3] मत्स्यमांसासवादिभिः ।
भक्ष्यभोज्यादिभिर्नानापदार्थैः षड्रसान्वितैः ।
सम्यक् सन्तोषयेद्देवि मिथुनान्यतिभक्तितः[4] ॥ ८७ ॥
प्रौढान्तोल्लासपर्यन्तं[5] कुर्यात् श्रीचक्रमम्बिके ।
एवं यः कुरुते देवि सकृदष्टाष्टकार्चनम् ॥ ८८ ॥
ब्रह्मविष्णुमहेशादिदेवताभिः स पूज्यते[6] ।
किं पुनर्मानिवाद्यैश्च साक्षात् शिव इवापरः* ॥ ८९ ॥
यदर्चनाच्चतुःषष्टियोगिनीगणसंस्तुतः[7] ।
पुनरावृत्तिरहितो निवसेत्तव[8]सन्निधौ ॥ ९० ॥
समस्तदेवताप्रीतिकारणं परमेश्वरि[9] ।
अस्मात् परतरा पूजा नास्ति सत्यं न संशयः ॥ ९१ ॥
पश्येदेवंविधं चक्रं यो भक्त्याष्टाष्टकं प्रिये[10] ।
यज्ञदानतप[11]स्तीर्थव्रतकोटिफलं लभेत् ॥ ९२ ॥
राजा यः कारयेद्देवि भक्त्याष्टाष्टकपूजनम्[12] ।
चतुःसागर[13]पर्यन्तां महीं शास्ति न संशयः ॥ ९३ ॥
श्रीकण्ठादीनि पञ्चाशन्मिथुनानि समर्चयेत् ।
पूर्वोक्तेन विधानेन कुलेश्वरि विधानवित् ॥ ९४ ॥

---

1. ख, मर्चयेत् ।

2. क, कार्यात्मसिद्धये; ङ; कर्मलोपं न कुर्वीत चेष्टा कार्या सुसिद्धये ।

* ख, घ पुस्तकयोः इत आरभ्य परमेश्वरीत्यन्तं श्लोकद्वयं नास्ति ।

3. ङ, गन्धपुष्पाम्बराकल्पैः । 4. क, शक्तितः ।

5. ङ, प्रौढोल्लासेन सहितं । 6. ग, घ, देवताभिश्च पूजयेत् ।

7. क, संयुतः ; ङ, संस्थितः । 8. ख, निवसेच्छिव ।

9. ङ, प्रीतिकारिणी परमेश्वरी । 10. क, यस्तु भक्तः समाहितः ।

11. ङ, यज्ञदानव्रतै । 12. क, ग, घ, भक्त्याष्टकसुसिद्धये ।

13. ग, घ, चतुःसगव ।

स्वकार्यफलसिद्ध्यर्थं वित्तशाठ्य[1]विवर्जितः ।
प्रौढान्तोल्लासयुक्तानि मिथुनानि समर्चयेत्[2] ॥ ९५ ॥
सन्तुष्टानि प्रयच्छन्ति साधकायेप्सितं फलम्[3] ।
अव्याहताज्ञः सर्वत्र पूज्यते देववत् प्रिये ।
तव लोके वसेद्देवि ब्रह्मादिसुरसंस्तुतः[4] ॥ ९६ ॥
केशवादि गणेशादि कामादि मिथुनानि च ।
श्रीकण्ठादि समभ्यर्च्य[5] तत्फलं लभते ध्रुवम्* ॥ ९७ ॥
अनुग्रहन्तु यः कुर्यात् डाकिन्यादिसमर्चने[6] ।
मासे मासेऽथवा वर्षे[7] स्वजन्मदिवसे प्रिये ॥ ९८ ॥
पूर्वोक्तेन विधानेन यथाविभवविस्तरम् ।
प्रौढान्तोल्लासपर्यन्तं तोषयेत्तद्विधानवित्[8] ॥ ९९ ॥
कुर्वन्त्यनुग्रहं देवि सन्तुष्टाः सर्व[9]देवताः ।
सर्वोपद्रव[10]रहितः सर्वैश्वर्यसमन्वितः ॥ १०० ॥
लोकेऽस्मिन् संस्तुतः[11] सर्वैः स जीवेच्छरदां शतम्[12]† ।
देहान्ते समवाप्नोति तव लोकं न संशयः ॥ १०१ ॥
दूतीयागन्तु[13] यः कुर्यात् पूर्वोक्तविधिना प्रिये[14] ।
निर्विकल्पेन चित्तेन नवशक्ति[15]समन्वितः ॥ १०२ ॥

---

* ख पुस्तके इत आरभ्य समर्चयेदित्यन्तं श्लोकार्द्धद्वयं न दृश्यते ।

† ग पुस्तके अस्मादारभ्य पीठार्चनफलं लभेद् इत्यन्तं सार्द्धश्लोकद्वयं नास्ति ।

1. क, ग, घ, वित्तलोभ; ख, धनलोभ ।
2. ङ, प्रौढान्तोल्लाससहितो मिथुनान्यत्र कारयेत् । 3. ङ, वरं ।
4. क, सुरवन्दिते; ग, घ, सुरसवृतः; ङ, ब्रह्मादीश्वरसंस्तुतः ।
5. ङ, श्रीकण्ठादिवदभ्यर्च्य । 6. क, समर्चयन्; ख, समर्चयेत् ।
7. क, राध्य । 8 ङ, त्तां विधानतः ।
9. ख, ङ, तास्तु । 10. ख, सर्वोपरोग; ङ, सर्वापद्रोग ।
11. ङ, सत्कृतः ।
12. ग, घ, षष्टिपीठार्चनफलं लभेत् । 13. ख, ग, इति यागन्तु ।
14. ङ, कुर्यात् पूर्वोक्तविधिना डाकिन्याः पूजनं प्रिये ।
15. क, अष्टशक्ति; ख, श्रेष्ठशक्ति ।

वर्षे वर्षे चतुःषष्टिपीठार्चनफलं लभेत् ।
आज्ञासिद्धिर्भवेत्तस्य देवताप्रीतिमाप्नुयात् ॥ १०३ ॥
त्रिकपूजान्तु[1] यः कुर्यादिच्छाज्ञानक्रियात्मिकाम्[2] ।
आगमोक्तेन विधिना पूर्ववत्तद्विधानवित् ॥ १०४ ॥
पदार्थैस्तोषयेत्[3] सम्यक् यथाविभवविस्तरम् ।
सन्तुष्टा देवतास्तिस्रः[4] सर्वकर्म[5]फलप्रदाः ।
देवेशि साधकाभीष्टं प्रयच्छन्ति न संशयः ॥ १०५ ॥
इत्यादिदेवतापूजां विशेषदिवसेषु यः[6] ।
करोति[7] शस्त्रविधिना स भवेदावयोः प्रियः ॥ १०६ ॥
श्रीचक्रं कौलिको मोहाद्विशेषदिवसेषु यः ।
न करोति समर्थः सन् स भवेद् योगिनीपशुः ॥ १०७ ॥
कुलपूजां विना चक्रे[8] नाधिकारः कथञ्चन* ।
कुलपूजां सुनियतं यः करोति स कौलिकः ॥ १०८ ॥
विना यन्त्रेण पूजा चेद्देवता न प्रसीदति ।
कुलपूजां सुनियतं यः करोति हि कौलिकः ।
कुलेशि सर्वदाप्नोति[9] योगिनीवीरमेलनम् ॥ १०९ ॥
नीचोऽपि वा[10] सकृद्भक्त्या कारयेद् यः कुलार्चनम् ।
स सद्गतिमवाप्नोति किमुतान्ये द्विजातयः ॥ ११० ॥
तस्मात् सर्वप्रयत्नेन सर्वावस्थासु सर्वदा ।
कुलपूजारतो भूयादभीष्टफलसिद्धये ॥ १११ ॥

---

* ख, घ, ङ पुस्तकेषु श्लोकोऽयं न दृश्यते ।

1. ङ, पूजात्रिकन्तु ।

2. क, एकां पूजान्तु यः कुर्यद्दिव्यज्ञानक्रियात्मिकाम् ।

3. ङ, षड्रसैः । 4. ङ, सर्वाः ।

5. ख, सर्वकाले ; ङ, सर्वज्ञान ।

6. ख, ङ, दिवसेषु च । 7. क, ग, घ, भजेत ; ङ, भजेयुः ।

8. ग, वत्स । 9. ख, ङ, समवाप्नोति ; ग, घ, सर्वमाप्नोति ।

10. क, ग, घ, दुःशीलोऽपि ।

कुलपूजाधिको यज्ञः कुलपूजाधिकं व्रतम् ।
कुलपूजाधिकं तीर्थं कुलपूजाधिकं तपः ॥ ११२ ॥
कुलपूजाधिकं दानं कुलपूजाधिका क्रिया ।
कुलपूजाधिकं ज्ञानं कुलपूजाधिकं सुखम् ॥ ११३ ॥
कुलपूजाधिको धर्मः कुलपूजाधिकं फलम् ।
कुलपूजाधिकं ध्यानं कुलपूजाधिकं महः ॥ ११४ ॥
कुलपूजाधिको योगः कुलपूजाधिका गतिः ।
कुलपूजाधिकं भाग्यं कुलपूजाधिकाऽर्चना ॥ ११५ ॥
नास्ति नास्ति पुनर्नास्ति त्वां शपे कुलनायिके ।
बहुनात्र किमुक्तेन रहस्यं शृणु पार्वति ॥ ११६ ॥
वेदशास्त्रोक्तमार्गेण कुलपूजां करोति यः[1] ।
तत्समीपे स्थितं मां त्वां विद्धि नान्यत्र भाविनि[2] ।
इदं सत्यमिदं सत्यं सत्यं सत्यं न संशयः ॥ ११७ ॥
खभूमिदिग्जलगिरिवनसर्वचराः प्रिये ।
सहस्रकोटियोगिन्यस्तावन्तो भैरवा अपि ।
नियुक्ता हि मया देवि कुलसंरक्षणाय च ॥ ११८ ॥
दिवसे दिवसे सर्वे पार्वति मुदिताननाः[3] ।
साधकानेव वीक्षन्ते स्वस्वपूजनलिप्सया[4] ॥ ११९ ॥
अपूजितास्तु निघ्नन्ति[5] पालयन्ति[6] सुपूजिताः ।
गुरुभक्तान् सदाचारान् गुह्यधर्मान् सदाशिवान्[7] ॥ १२० ॥
भक्तिहीनान् दुराचारान् नाशयन्ति प्रकाशकान्[8] ।
श्रीचक्रे संस्मरेत्तस्माद् योगिनीभैरवान् प्रिये ॥ १२१ ॥

---

1. क, पूजां करोति यो नरः ।

2. ग, घ, त्वत्समीपे स्थिति याति विधिनान्यत्र भाविनि ।

3. ग, घ, दिवसे दिवसे सर्वे पर्वते जलकानने; ङ, दिवसेषु विशेषेषु सर्वे च मुदिता नराः ।

4 ख, सावधानेन रक्षन्ते देवाः पूजनकाङ्क्षया; ङ, "स्वस्व" इत्यत्र "स्वयं" । 5. ङ, विघ्नन्ति । 6. ख, ङ, प्रसीदन्ति ।

7. ड, नमन्ति च । 8. ड, प्रसाधकान् ।

न स्मरेद् यदि मूढात्मा योगिनीनां भवेत् पशुः।
तस्मात् श्रीचक्रमध्ये तु संस्मरेत् सर्वदेवताः[1] ॥ १२२ ॥
अनुगृह्णन्ति देवेशि साधकान् नात्र संशयः[2]।
अनुग्रहन्तु वक्ष्यामि शृणु देवि यथाक्रमम् ॥ १२३ ॥
आत्मनोऽनुग्रहार्थं वा परार्थं श्रेष्ठमुत्तमम्।
शुचिद्रव्यसमायुक्तं चक्रपूजासमन्वितम् ॥ १२४ ॥
सर्वेषां दक्षिणां दत्त्वा होमपात्रं पृथक् पृथक्।
प्रपूजयेच्च वर्णस्थाः सर्वाभरणभूषिताः ॥ १२५ ॥
हर्षानन्दस्वयंयुक्ताः प्रसन्नाश्च पृथक् पृथक्।
पायसाज्यौदनैर्युक्तैर्नैवेद्यैर्भक्तिसंयुतैः ॥ १२६ ॥
गन्धपुष्पादिभिः सम्यगर्चयित्वा गणेश्वरम्।
हसख फ्रें हेसौं [ह्सौं] डां डीं डमलवरयूं ततः ॥ १२७ ॥
श्रीपादुकां हेसौ [ह्सौ] मिति च हसखफ्रें पुटन्ततः।
सङ्कल्प्य मनसोऽभीष्टं मधुरत्रितयैः प्रिये ॥ १२८ ॥
गन्धपुष्पादिभिः सम्यगर्चयित्वा पृथक् पृथक्।
पूजयित्वेप्सितान् कामान् प्रार्थयेत् कमलानने ॥ १२९ ॥
ईप्सितानि च सर्वाणि साधको लभते वरम्।
आत्मनश्च परस्यापि रक्षार्थं पूजयेत् प्रिये ॥ १३० ॥
रोगाणां नाशनार्थञ्च यथात्र पुत्रसिद्धये।
वश्यार्थं मङ्गलार्थञ्च धर्मकमार्थिसिद्धये ॥ १३१ ॥
सप्ताहं पूजयेद्देवि चतुर्द्दशदिनानि च।
एकविंशदिनान्यत्र लभते चेप्सितं फलम् ॥ १३२ ॥
दक्षिणाञ्च पृथग् दद्याद्वस्त्रभूषाङ्गुरीयकम्।
कुलाष्टकसमायुक्तं चतुःषष्टिसमन्वितम् ॥ १३३ ॥
अर्चितञ्च प्रयत्नेन सिद्धिर्भवत्यनेकशः।
वित्तशाठ्यं न कुर्वीत यदीच्छेत् सिद्धिमात्मनः ॥ १३४ ॥

1. क, संस्मरेद्देवताश्च ताः; ङ, कुलदेवताः।
2. ङ, साधकत्वे न संशयः।

एवं षट्कं समाख्यातमनुग्रहं वरानने ।
अर्चितव्यं प्रयत्नेन साधकैः स्वेष्टसिद्धये ॥ १३५ ॥
ध्यात्वैव पूजयेदेता डाकिन्याद्या वरानने ।
संपूज्य सप्तमीं देवीं पूजयेत् सर्वसिद्धये ॥ १३६ ॥
शक्तिदेहसमुत्पन्नं शक्तिनिर्माल्यभोजने ।
स्ववर्गेण समायुक्ता दत्तनिर्माल्यमित्यपि ।
प्रतिगृह्णयुगं स्वाहा इति निर्माल्यसर्जनम् ॥ १३७ ॥
डाकिनी सर्पवदना वित्तजा ज्वलनप्रभा ।
कमण्डलुं कर्त्तृकाञ्च धारयन्ती वरप्रदा ॥ १३८ ॥
उलूकवदना देवी राकिणी नीलसन्निभा ।
खड्गखेटकसंयुक्ता सर्वालङ्कारभूषिता ॥ १३९ ॥
लाकिनी श्रीकपालाढ्या पाशाङ्कुशधरा सती ।
पाटलीपुष्पसङ्काशा सर्वाभरणभूषिता ॥ १४० ॥
काकिनी हयवक्त्रा च माणिक्यसदृशप्रभा ।
त्रिमुखी मुण्डसंयुक्ता सिद्धिदा सर्वशोभना ॥ १४१ ॥
शाकिनी त्वञ्जनप्रख्या मार्जारास्या सुशोभना ।
कुलिशञ्च तथा दण्डं धारयन्ती शुचिस्मिता ॥ १४२ ॥
हाकिनी ऋक्षवदना नीलनीरदसन्निभा ।
कपालशूलहस्ता च खेटकैरुपशोभिता ।
एकद्वित्रिचतुःपञ्चषण्मुखी सरभाभया* ॥ १४३ ॥
इति ते कथितं किञ्चिद्विशेषदिवसार्चनम् ।
समासेन कुलेशानि किम्भूयः श्रोतुमिच्छसि ॥ १४४ ॥

इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे ऊर्द्ध्वाम्नायतन्त्रे विशेषदिवसार्चनं नाम दशम उल्लासः ॥ १० ॥

---

* त्रयोविंशत्यधिकशततमश्लोकोत्तरार्द्धात् त्रयश्चत्वारिंशदधिकशततमश्लोकपर्यन्तं क, ख, ग, घ पुस्तकेषु नास्ति ।

# एकादश उल्लासः।

श्रीदेव्युवाच।

कुलेश श्रोतुमिच्छामि सर्वलोकैकपूजित।
कुलाचारक्रमं देव वद मे करुणानिधे ॥ १ ॥

ईश्वर उवाच।

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि।
तस्य श्रवणमात्रेण पशुपाशैः[1] प्रमुच्यते ॥ २ ॥
यदि चेद्दीक्षितो ज्येष्ठः[2] कुलपूजादिवर्जितः।
तत्कनिष्ठः क्रमज्ञ[3]श्चेत् कुलपूजां समाचरेत् ॥ ३ ॥
तत्समीपं ततो गत्वा नमस्कृत्य गुरुं यथा[4]।
तस्मै निवेद्य तत्सर्वं शेषं भुञ्जीत पार्वति ॥ ४ ॥
पूजामध्ये गुरौ ज्येष्ठे पूज्ये वापि[5] समागते।
नत्वा ब्रूयात् स्थितं शिष्टमाचरेत्तदनुज्ञया ॥ ५ ॥
ज्येष्ठस्य च कनिष्ठस्य शिष्यावेकत्र संस्थितौ।
तत्र पूर्ववदाचारः कथितः कुलनायिके ॥ ६ ॥
अज्ञातकौलिके प्राप्ते[6] पौर्वापर्यन्तु चिन्तयेत्।
स्मृत्वा स्वस्य गुरुं देवि स्वस्य मार्गेण[7] तर्पयेत् ॥ ७ ॥
नित्यार्चनं दिने कुर्याद्रात्रौ नैमित्तिकार्चनम्।
उभयोः काम्यकर्माणि चेति शास्त्रस्य निर्णयः ॥ ८ ॥

---

1. ख, पशुपापैः; ङ, सर्वपापैः। 2. ख, यदा तु दीक्षितः श्रेष्ठः।
3. ख, क्रतुज्ञ। 4. ङ, गुरोर्यथा। 5. ङ, कनिष्ठे वा।
6. क, अज्ञातकालप्राप्तञ्चेत्; ग, घ, अज्ञातकुलप्राप्तञ्चेत्; ङ, अज्ञाते कौलिके प्राप्ते पारम्पर्यं समाचरेत्।
7. ङ, स्मृत्वामुष्य गुरुं देवि स्वैकमार्गेण। 'स्वस्य' इत्यत्र 'स्वस्व' इति क्वचित्।

अस्नात्वाऽनासनस्थो वा भुक्त्वा वा प्रलपन्नपि[1] ।
गन्धपुष्पाक्षता[2]कल्पवस्त्राद्यैरनलङ्कृतः ।
अविन्यस्तशरीरो वा कुलपूजां न चाचरेत् ॥ ९ ॥
विना मन्त्रेण[3] या पूजा विना मांसेन[4] तर्पणम् ।
विना शक्त्या तु यत्पानं निष्फलं कथितं प्रिये ॥ १० ॥
श्रीचक्रमेको वा कुर्या[5]देकपात्रन्तु नार्चयेत् * ।
नार्चयेदेकहस्तेन न पिबेदेकपाणिना ॥ ११ ॥
मत्स्यमांसासवैर्द्देवि[6] नार्चयेत् पशुसन्निधौ ।
प्रणम्य प्रविशेच्चक्रं विनिर्गच्छेत्प्रणम्य च ॥ १२ ॥
श्रीचक्रे नासने तिष्ठेन्न च वीरासने प्रिये[7]*† ।
श्रीचक्रदर्शने देवि नेत्रयोः पापनाशनम् ।
तन्नास्ति चेद् व्रण[8]द्वन्द्वं कौलिक[9]स्याक्षियुग्मकम् ॥ १३ ॥
अनाचारान् सदाचारान् चक्रस्थान् शक्तिकौलिकान् ।
शिवगौरीधिया देवि भावये[11]न्नावमानयेत् ॥ १४ ॥
कुलाचार्यगृहं गत्वा भक्त्या पापविशुद्धये[12] ।
याचेदमृतञ्चान्नञ्च[13] तदभावे जलं पिबेत् ॥ १५ ॥
कुलाचार्येण तच्छक्त्या[14] दत्तं पात्रञ्च भक्तितः ।
नमस्कृत्य तु गृह्णीयादन्यथा नरकं व्रजेत् ॥ १६ ॥

---

* श्लोकोऽयं ख पुस्तके नास्ति । † ङ पुस्तके श्लोकार्द्धमिदं न दृश्यते ।

1. ङ, अस्नात्वा चाङ्गनस्थो वा भुक्त्वा वा प्रणतावपि ।
2. ङ, गन्धपुष्पाम्बरा । 3. ख, घ, विना मद्येन; ङ, विना मांसेन ।
4. ङ, मद्येन । 5. ङ, न कुर्या । 6. ख, र्द्देवीं ।
7. ख, श्रीचक्रे पूजकस्तिष्ठेत् बद्धवीरासनः प्रिये ।
8. क, नन्वस्ति चेदृण । 9. ख, नत्वा तिष्ठेदृणद्वन्द्वं लौकिक ।
10. ख, अनाचाराः सदाचाराश्चक्रस्थाः शक्तिकौलिकाः ।
11. ख, भाषये । 12. ङ, विमुक्तये ।
13. ख, याचयेदमृतञ्चापि; ङ, याचयेदमृतान्नञ्च ।
14. क, यच्छक्त्या; ख, आचार्येण तु तच्छक्त्या ।

अस्नात्वा वाप्यभक्त्या वा लोभाद्वापि[1] कुलेश्वरि ।
यः सेवेत कुलद्रव्यं दारिद्र्यं समवाप्नुयात्[2] ॥ १७ ॥
उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गणावृतः[3] ।
व्यग्रो रुष्टो[4] विवादी च न सेवेत कुलामृतम् ॥ १८ ॥
योगामृतेन निष्ठीवा[5]न्मद्यभाण्डपरिभ्रमात् ।
ऊर्द्ध्वनालेन पानाच्च देवताशापमाप्नुयात् ॥ १९ ॥
एकासने निविष्टस्तु भुञ्जानस्त्वेकभाजने ।
एकपात्रे पिबेद्द्रव्यं[6] ते यान्ति नरकं प्रिये ॥ २० ॥
यः सेवेत कुलद्रव्यमेकग्रामे स्थिते गुरौ ।
तत्कुलज्ञे[7] च तत्पुत्रे स्वज्येष्ठे कुलदेशिके[8] ।
विनानुज्ञां महेशानि सोऽक्षयं नरकं व्रजेत् ॥ २१ ॥
उच्छिष्टो न स्पृशेच्चक्रे[9] कुलद्रव्याणि पार्वति ।
बहिः[10] प्रक्षाल्य च करौ कुलद्रव्याणि दापयेत् ॥ २२ ॥
मद्यभाण्डं[11] समुद्धृत्य न पात्रं पूरयेत् प्रिये ।
भोगपात्रं सुराकुण्डे[12] निक्षिपेन्न कदाचन ॥ २३ ॥
चक्रमध्ये शुचिधिया करप्रक्षालनादिकं ।
यः करोति हि मूढात्मा स भवेदापदाम्पदम्[13] ॥ २४ ॥
निष्ठीवनं मलं मूलमधोवायुविसर्जनम् ।
श्रीचक्रमध्ये यः कुर्यात् स भवेद् योगिनीपशुः ॥ २५ ॥

---

1. ख, अस्नात्वा वापि भुक्त्वा; ङ, अस्नात्वा वापि भुक्त्वा वाप्यभुक्त्वा वा ।

2. क, सदाऽविद्यामवाप्नुयात्; ङ, सदा विक्लवमाप्नुयात् ।

3. ङ, दिगम्बरः । 4. क, ख, पराङ्मुखो । 5. ख, ङ, निष्ठीवे ।

6. ङ, पिबेत्तोयं । 7. ङ, तत्कुलीने ।

8. क, कुलदेशिकः; ख, तत्कुलेशि पिबेत् पुत्रे स्वज्येष्ठे कुलयोषिति ।

9. ङ, उच्छिष्टं न स्पृशेच्चक्रं । 10. ङ, न हि ।

11. ख, तीर्थभाण्डं; ङ, मधुभाण्डं । 12. ख, ङ, सुधाकुण्डे ।

13. ङ, दापदास्पदं

चक्रमध्ये घटे भग्ने पात्रे च पतिते भुवि[1] ।
दीपनाशे च शान्त्यर्थं[2] श्रीचक्रं कारयेत् प्रिये ॥ २६ ॥
मत्ता[3] जपन्ति ध्यायन्ति स्तुवन्ति प्रणमन्ति च ।
बोधयन्ति च पृच्छन्ति नन्दन्ति ज्ञानिनः[4] प्रिये ॥ २७ ॥
मत्ता[5] भ्रमन्ति गर्जन्ति हसन्ति विवदन्ति च ।
रुदन्ति स्त्रिय[6]मिच्छन्ति निन्दन्त्यज्ञानिनः[7] प्रिये ॥ २८ ॥
परिहासं प्रलापञ्च वितण्डां बहुभाषितम् ।
औदासीन्यं भयं क्रोधं चक्रमध्ये विवर्जयेत् ॥ २९ ॥
पात्रहस्तो महादेवि न भ्रमेच्चक्रमध्यतः ।
पूर्णपात्रं करे कृत्वा[8] न तिष्ठेत्तु चिरं प्रिये ॥ ३० ॥
नालपेत्[9] पात्रहस्तः सन् न भिन्द्यात् पात्रमम्बिके ।
पादाभ्यां न स्पृशेत् पात्रं न बिन्दुं पातयेदधः ॥ ३१ ॥
नैकहस्तेन दातव्यं न मुद्रावर्जितं प्रिये ।
पात्रं न चालयेत् स्थानान्न कुर्यात् पात्रसङ्करम् ॥ ३२ ॥
सशब्दं न पिबेन्मद्यं[10] तथैव च न पूरयेत् ।
नान्योन्यं ताडयेत्पात्रं तथा न पातये[11]दधः ॥ ३३ ॥
साधारं नोद्धरेत् पात्रमनाधारे न[12] निक्षिपेत् ।
रिक्तपात्रं[13] न कुर्वीत न पात्रं भ्रामयेत् प्रिये ॥ ३४ ॥
न पात्रं लङ्घयेद्धीमान् पात्रं नोत्पातयेत् प्रिये* ।
प्रक्षाल्य गोपयेत् पात्रमित्याज्ञा परमेश्वरि[14] ॥ ३५ ॥

---

* ख, ङ पुस्तकयोः श्लोकार्द्धमिदं न दृश्यते ।

1. ङ, स्खलिते प्रिये । 2. ङ, तच्छान्त्यै ।
3. क, मन्त्रान् ; ङ, केचित् । 4. ङ, वदन्ति ज्ञानिनं ।
5. ङ, अन्ये । 6. ङ, वदन्ति प्रिय ।
7. ङ, नन्दन्त्यज्ञानिनं । 8. ड, धृत्वा ।
9. क, नालभेत् । 10. ङ, द्द्रव्यं । 11. क, ताडये ।
12. क, मनाधारे च ; ङ, माधारेण न । 13. क, रक्तपात्रं ।
14. ख, शङ्करैः कृता ।

यदा[1] सन्दीपितोल्लासः कौलिकः पशुमीक्षते ।
पठेद्वा पशुशास्त्राणि सङ्गच्छेद्वा पशुस्त्रियम्[2] ॥ ३६ ॥
कुर्यात् पशुप्रसङ्गं वा पशुकार्याणि वा चरेत् ।
धर्मार्थायुर्यशःपुण्यमर्थसौख्यादि[3] नश्यति ॥ ३७ ॥
श्रीचक्रस्थं कुलद्रव्यं यः पशुभ्यः प्रयच्छति ।
स्नेहाल्लोभा[4] द्भयाद्वापि स भवेद् योगिनीपशुः ॥ ३८ ॥
रिपुणापि न कर्त्तव्यो वाग्वादश्चक्रमध्यतः ।
पितृमातृसमं पश्येत्तेनोक्तं[5] परुषं सहेत् ॥ ३९ ॥
यथा स्त्रीपुत्रमित्रादि दृष्ट्वा चेतः प्रहृष्यति[6] ।
तथा चेत्[7] कौलिकान् दृष्ट्वा स भवेद् योगिनीप्रियः ॥ ४० ॥
ब्रह्मादिस्तम्बपर्यन्तं यस्य मे[8] गुरुसन्ततिः ।
तस्य मे सर्वशिष्यस्य को न पूज्यो महीतले ।
इति निश्चितबुद्धिर्यः स भवेदावयोः प्रियः ॥ ४१ ॥
अहं गुरुरहं ज्येष्ठस्त्वहं वेद्मीति गर्वितः ।
अहमेव गतिर्येषां कौलिका न[9] भवन्ति ते ॥ ४२ ॥
श्रीगुरुं कुलशास्त्राणि पूजास्थानानि यानि च ।
भक्त्या श्रीपूर्वकं देवि प्रणम्य परिकीर्त्तयेत् ॥ ४३ ॥
गुरुं नाम्ना न भाषेत जपकालादृते प्रिये ।
श्रीनाथ देव स्वामीति विवादे साधने वदेत् ॥ ४४ ॥
श्रीगुरोः पादुकां मुद्रां[10] मूलमन्त्रं स्वपादुकाम् ।
शिष्यादन्यस्य[11] देवेशि न वदेद् यस्य कस्यचित् ॥ ४५ ॥

---

1. ख, सदा । 2. ङ, पशुश्रियं ।
3. ङ, ज्ञानसौख्यादि । 4. ङ, स्वेच्छालोभा ।
5. ख, पश्येत् ह्यनृतं ।
6. ङ, यथा दृष्ट्वा प्रहृष्येत स्वजनं मित्रसुप्रियं । 7. ङ, तथा च ।
8. क, ख, या । 9. क, ख, कौलिकास्तु ।
10. ङ, देवि । 11. ङ, शिष्यादन्यत्र ।

पारम्पर्यगमाम्नायं[1] मन्त्राचारादिकं प्रिये ।
सर्वं गुरुमुखाल्लब्धं[2] सफलं स्यान्न चान्यथा ॥ ४६ ॥
श्रीशास्त्राश्रयमूलञ्च[3] पुस्तकं न वदेत् प्रिये[4] ।
नित्यं समर्चयेद्भक्त्या पशुहस्ते न निक्षिपेत् ॥ ४७ ॥
स्वदारवन्निषेवेत कुलशास्त्राणि पार्वति ।
पशुशास्त्राणि सर्वाणि[5] वर्जयेत् परदारवत् ॥ ४८ ॥
स्वचर्मस्थं यथा क्षीरमपेयं स्याद् द्विजोत्तमैः ।
तथा पशुमुखाद्धर्मो न श्रोतव्यो[6] हि कौलिकैः ॥ ४९ ॥
यः शृणोति कुलाचारं यथाशास्त्रञ्च यो वदेत् ।
तावुभौ गच्छतः साक्षाद् योगिनीवीरमेलनम् ॥ ५० ॥
अश्रद्धधाना ये चात्र कुलधर्मे[7] कुलेश्वरि ।
नरकान्नो निवर्त्तन्ते यावदाहूत[8]संप्लवम् ॥ ५१ ॥
ऊढा धृता तथा क्रीता मूल्येन च समाहृता[9] ।
सकृत् कामरता[10] वापि पञ्चधा गुरुयोषितः ।
अलङ्घ्याः[11] पूजनीयाः स्युर्गुरुवद्गुरुयोषितः ॥ ५२ ॥
गुरुशक्तिं वीरभार्यां[12] कुमारीं[13] व्रतधारिणीम् ।
व्यङ्गाङ्गीं विकृताङ्गीञ्च कुब्जामपि न[14] कामयेत् ॥ ५३ ॥
सुताञ्च भगिनीं पौत्रीं स्नुषां वापि प्रियामपि ।
न कामयेद्[15]गुरोरग्रे कुर्यान्नान्योन्यसंग्रहम्[16] ॥ ५४ ॥

---

1. ङ, पारम्पर्यं समास्थाय ।
2. ख, गुरुकुलाल्लब्धं ।
3. ङ, श्रीशास्त्राश्रयभूतञ्च ।
4. क, पुस्तकं हि वदेत् प्रिये ; ङ, पुस्तकं परमेश्वरि ।
5. क, देवेशि ।
6. ङ, पशुमुखात् सर्वं न श्रोतव्यम् ।
7. ख, कुलशास्त्रे ; ङ, कुलधर्मं ।
8. ङ, दाभूत ।
9. ग, घ, समाहिता ; ङ, उद्धृता च महाप्रीता मूलेन च समाहृता ।
10. ख, ग, घ, *कालगता* ।
11. ख, उल्लङ्घ्य ।
12. ङ, महाशक्ति ।
13. क, कुमारी ।
14. क, कुब्जिकामपि ।
15. ग, घ, न कारये ।
16. घ, ङ, गूहनं ।

कृष्णांशुकां कृष्णवर्णां कुमारीञ्च[1] कृशोदरीम् ।
मनोहरां यौवनस्थामर्चयेद्देवताधिया ॥ ५५ ॥
एकदापि न सेवेत[2] बलेन कुलयोगिनीम्[3] ।
चक्रमध्ये स्वयं क्षुब्धां कामयेत् कुलसुन्दरि[4] ॥ ५६ ॥
आममांसं सुराकुम्भं मत्तेभं सिद्धिलिङ्गिनम् ।
सहकारमशोकञ्च क्रीडालोलाः कुमारिकाः ॥ ५७ ॥
एकवृक्षं श्मशानञ्च समूहं योषितामपि ।
नारीञ्च रक्तवसनां दृष्ट्वा वन्देत भक्तितः ॥ ५८ ॥
गुरुशक्तिसुतज्येष्ठकनिष्ठान् कुलदेशिकान् ।
कुल[5]दर्शनशास्त्राणि कुलद्रव्याणि कौलिकान् ॥ ५९ ॥
प्रेरकान् सूचकांश्चापि वाचकान् दर्शकांस्तथा ।
शिक्षकान् बोधकान्[6] योगी योगिनीसिद्धिरूपकान्[7] ॥ ६० ॥
कन्यां कुमारिकां नग्नामुन्मत्तां वापि योषितम् ।
न निन्देन्न जुगुप्सेत[8] न हसेन्नावमानयेत् ॥ ६१ ॥
नाप्रियं नानृतं ब्रूयात् कस्यापि[9] कुलयोगिनः ।
कुरूपा[10] चेति कृष्णेति न वदेत् कुलयोषितम् ॥ ६२ ॥
परीक्षयेन्न भक्तानां वीराणाञ्च कृताकृतम्[11] ।
न पश्येद्वनितां[12] नग्नामुन्मत्तां प्रकटस्तनीम्[13] ॥ ६३ ॥
दिवसे न रमेन्नारीं[14] तद्योनिं नैव वीक्षयेत् ।
या काचिदङ्गना लोके सा मातृ[15]कुलसम्भवा ॥ ६४ ॥

---

1. ख, कृशां गौरीं कृष्णवर्णां दयाढ्याञ्च ।
2. ङ, न लभ्येत ।
3. ङ, कुलयोगिनी ।
4. ड, कामयेन्न कदाचन ।
5. ङ, फल ।
6. ख, बाधकान् ।
7. क, सिद्धरूपिणे ; ङ, सिद्धिपूरुषान् ।
8. ङ, न निन्द्येन्ना च संक्षुभ्येत् ।
9. ङ, न्नमन्ति ।
10. ङ, कुलपा ।
11. ख, ग, कृताकृते ।
12. क, ख, ग, पश्येत् पतितां ।
13. क, मपि योगिनीं ।
14. ङ, न दिवा सेवयेन्नारीं ।
15. ख, सा माता ।

कुप्यन्ति कुलयोगिन्यो वनितानां व्यतिक्रमात् ।
स्त्रियं शतापराधाञ्चेत्[1] पुष्पेणापि न ताडयेत् ।
दोषान्न गणयेत् स्त्रीणां गुणानेव[2] प्रकाशयेत् ॥ ६५ ॥
तिष्ठन्ति कुलयोगिन्यः कुलवृक्षेषु सर्वदा ।
तत्पत्रेषु न भोक्तव्यमर्चयेत्तु[3] विशेषतः ॥ ६६ ॥
न स्वपेत् कुलवृक्षाधो न चोपद्रवमाचरेत् ।
दृष्ट्वा भक्त्या[4] नमस्कुर्याच्छेदयेन्न कदाचन ॥ ६७ ॥
श्लेष्मातकं करञ्जाख्यं निम्बाश्वत्थकदम्बकाः ।
विल्ववटोडुम्बराश्च तिन्तिडी नवमी[5] स्मृता ॥ ६८ ॥
प्रायश्चित्तं भृगोः पातं संन्यासं व्रतधारणम्[6] ।
तीर्थयात्राभिगमनं कौलः पञ्च विवर्जयेत् ॥ ६९ ॥
वीरहत्या वृथापानं वीरपत्नीनिषेवणम् ।
वीरद्रव्यापहरणम् तत्संयोगश्च पञ्चमः[7] ।
महापातकमित्युक्तं कौलिकानां कुलान्वये ॥ ७० ॥
शैवे तत्त्वपरिज्ञानं गारुडे विषभक्षणम् ।
ज्योतिषे ग्रहणं सारं कौलेऽनुग्रहनिग्रहौ[8] ॥ ७१ ॥
देवतागुरुशास्त्राणां[9] सिद्धाचारविडम्बकाः ।
विद्याचौरो गुरुद्रोही ब्रह्मराक्षसतां व्रजेत् ॥ ७२ ॥
गुरुवाक्यं हतं कृत्वा वीरान् निर्भर्त्स्य च प्रिये* ।
गुरुं हुङ्कृत्य तुङ्कृत्य वीरं निर्जित्य वादतः† ।
विकल्प्य कुलशास्त्राणि भवन्ति ब्रह्मराक्षसाः ॥ ७३ ॥

---

* ङ पुस्तके श्लोकार्द्धमिदं नास्ति ।
† क, ग, घ पुस्तकेषु इदं श्लोकार्द्धं न दृश्यते ।
1. ग, स्त्रियं शतापराधेन ; ङ, शतापराधैर्वनितां ।
2. ङ, गुणानिव । 3. ङ, मर्कपत्रे । 4. ङ, श्रुत्वा ।
5. ङ, कुलवृक्षा इमे । 6. क, सन्ध्यासंधारिणं स्मृतं ; ख, ग, घ, सन्ध्यासंव्रतधारिणं । 7. ङ, तत्संयोगाच्च पञ्चमं ।
8. ङ, सौरे च ज्योतिषं सारं कौलिकग्रहनिग्रहौ ।
9. क, देवतागुरुशास्त्राणि ; ङ, देवताकुलशास्त्राणि ।

एकाक्षरप्रदातारं यो गुरुञ्चावमानयेत् ।
श्वानं[1] योनिशतं गत्वा चण्डालत्वमवाप्नुयात् ॥ ७४ ॥
मातरं पितरं भार्यां भ्रातरं बान्धवं सुतम् ।
कुलनिन्दाकरं देवि हन्यादेवाविचारयन्[2] ॥ ७५ ॥
गुर्वर्थं[3] देवतार्थं वा कौलिकार्थं कुलेश्वरि ।
कुलागमार्थं[4]मथवा कुलधर्मार्थमेव वा ॥ ७६ ॥
देवि[5] निन्दाकरं हत्वा बाधितः स्वयमेव वा ।
यस्त्यजेद्दुस्त्यजप्राणान् स परे लीयते शिवे ॥ ७७ ॥
एकस्मिन्निधनं यत्र प्रापिते[6] दुष्टचारिणि ।
बहूनां भवति क्षेमं पुण्यं तस्य वधे भवेत् ॥ ७८ ॥
श्रीचक्रकृत[7]वृत्तान्तं शुभं वा यदि वाऽशुभम् ।
कदाचिन्नैव वक्तव्य[8]मित्याज्ञा परमेश्वरि ॥ ७९ ॥
कुलधर्मप्रसङ्गञ्च पशूनां पुरतः प्रिये ।
कदाचिन्नैव कुर्वीत शूद्राग्रे वेदपाठवत् ॥ ८० ॥
पीठक्षेत्रागमाम्नायं तद्विद्याचारकौलिकान् ।
कुलद्रव्यादिकं देवि न वदेत् पशुसन्निधौ ॥ ८१ ॥
यथा रक्षति चौरेभ्यो धनधान्यादिकं प्रिये[9] ।
कुलधर्मं तथा देवि पशुभ्यः परिरक्षयेत्[10] ॥ ८२ ॥
अन्तः कौलो बहिः शैवो जनमध्ये तु वैष्णवः[11] ।
कौलं[12] सुगोपयेद्देवि नारिकेलफलाम्बुवत् ॥ ८३ ॥
कुलधर्मादिकं सर्वं[13] सर्वावस्थासु सर्वदा ।
गोपयेच्च प्रयत्नेन जननीजारगर्भवत्[14] ॥ ८४ ॥

1. ङ, प्राणी । 2. ख, ङ, हन्यात्तमविचारतः । 3. ङ, कुलार्थं ।
4. क, ग, घ, कुलमार्गार्थं । 5. क, देवीं; ख, देव ।
6. ग, घ, निहते यत्र प्रापिते; ङ, एकस्मिन् निधने यत्र प्रापितो ।
7. ङ, देवि श्रीचक्र । 8. ङ, कर्त्तव्य ।
9. ङ, धनधान्यमजादिकं । 10. ङ, परिवारयेत् ।
11. ङ, अन्तः कौला बहिः शैवाः सभायां वैष्णवा मताः ।
12. ङ, कुलं । 13. ङ, कुलधर्ममिदं देवि । 14. ङ, जारवत् प्रिये ।

वेदशास्त्रपुराणानि स्पष्टानि[1] गणिका इव ।
इयन्तु शाम्भवी विद्या गुप्ता कुलवधूरिव ॥ ८५ ॥
सुगुप्त[2]कौलिकाचारमनुगृह्णन्ति देवताः ।
वाञ्छासिद्धिं प्रयच्छन्ति[3] नाशयन्ति प्रकाशकान् ॥ ८६ ॥
कुलेशि कुलशास्त्रज्ञाः कुलपूजापरायणाः ।
ये त्वां रहसि सेवन्ते ते तिष्ठन्ति तवान्तिके ॥ ८७ ॥
गुरुं प्रकाशयेद्धीमान् मन्त्रं यत्नेन गोपयेत्[4] ।
अप्रकाशप्रकाशाभ्यां नश्यतः सम्पदायुषी[5]* ॥ ८८ ॥
सर्वाचारपरिभ्रष्टः कुलाचारं समाश्रयेत्[6] ।
कुलाचारपरिभ्रष्टो रौरवं नरकं व्रजेत् ॥ ८९ ॥
शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि ।
कुलभ्रष्टस्य[7] देवेशि न दृष्टा निष्कृतिः क्वचित् ॥ ९० ॥
कुलधर्मं समाश्रित्य आचारं यो न पालयेत् ।
यथेच्छचारिणस्तस्य[8] महापातकिनः प्रिये ॥ ९१ ॥
आपदो दुरितं रोगा दारिद्र्यं कलहो भयम् ।
योगिनीनां प्रकोपश्च स्खलितानि[9] पदे पदे ॥ ९२ ॥
भ्रंशमानः[10] प्रनष्टश्च तेजोहीनोऽतिदुर्मतिः[11] ।
निन्दितः सर्वविद्विष्टो[12] विह्वलः[13] सङ्गवर्जितः ।
देशाद्देशान्तरं याति कार्यहानिश्च सर्वदा[14] ॥ ९३ ॥

---

* यत्तु इतः परं ख पुस्तके "श्रीचक्रमेको नो कुर्याद्दिकपाले न चाचरेत् । नार्पयेदेकहस्तेन न पिबेदेकपाणिना ।" इत्यधिकः श्लोको दृश्यते तस्यात्राप्रस्तावितत्वात् सोऽस्माभिरुपेक्षितः ।

1. ख, ङ, सामान्य । 2. ग, घ, सुगुप्तं ।
3. ख, ग, घ, वाक्यसिद्धि प्रयच्छन्ति; ङ, वाञ्छासिद्धिमवाप्नोति । 4. ङ, नैव प्रकाशयेत् । 5. ख, ङ, क्षीयन्ते सम्पदायुषः । 6. ख, कौलाचारः प्रवर्त्तते । ङ, गुप्ताचारं परिव्रजेत् ।
7. ङ, नष्टस्य । 8. ङ, स्ते स्युः । 9. ख, प्रकाशञ्च स्खलितञ्च ।
10. क, शंसमानः; ख, पुंसमानः ।
11. ङ, तेजोहीनोऽतिदुःखितः । 12. ख, सर्वभूतेषु ।
13. क, विपुलः । 14. ङ, राज्यहानिश्च जायते ।

तत्रापि[1] कुलमार्गस्थाः शाकिन्यः कुलपालिकाः ।
भक्षयन्ति पुरा तासां[2] वरो दत्तो मयैव तु ॥ ९४ ॥
तस्मादाचारवान्[3] देवि योगिनीनां प्रियो भवेत् ।
नाशयन्ति चतुर्वेदाननाचाराः[4] कुलेश्वरि ॥ ९५ ॥
पादुकामात्रसारज्ञः सदाचारेषु यन्त्रितः[5] ।
सदाचारेण देवत्वं[6] योगिनीवीरमेलनम् ।
सम्प्राप्नुवन्ति तिर्यक्त्वं कौलिकास्तद्विपर्ययात् ॥ ९६ ॥
आज्ञासिद्धमिदं[7] कौलमनाचाराद्विनश्यति ।
आचारपालनात् सत्यमाज्ञासिद्धिर्भविष्यति ॥ ९७ ॥
नाभिषेको[8] न मन्त्रो वा न शास्त्रपठनादिकम् ।
कारणं कुलधर्मस्य[9] सदाचारः[10] कुलेश्वरि ॥ ९८ ॥
बाला[11] श्रीपादुकातत्त्वलयाचारादिवासनाः[12] ।
यो वेत्ति समयी स स्यात् कौलिकश्चापि शाम्भवि ॥ ९९ ॥
तावन्न कौलिको देवि यावन्न समयीकृतः ।
देहपाते विमोक्षः स्यात् समयाचारपालनात् ॥ १०० ॥
संस्कारेण विहीनत्वाद् गुरुवाक्यस्य लङ्घनात् ।
आचारवर्जनाद्देवि[13] कौलिकः पतितो भवेत् ॥ १०१ ॥
नित्यं नैमित्तिकं काम्यं[14] मन्त्रयन्त्रादिलोपनम्[15] ।
अनर्हपशुदुःसङ्गमन्त्रसाङ्कर्यसम्भवम्[16] ॥ १०२ ॥

---

1. ङ, अत्रापि । 2. ख, पुरोडासं । 3. ङ, तस्मादाचारतो ।
4. क, ख, ग, चतुर्वेदाननाचारान्; ङ, चतुर्वेदाननाचारात् ।
5. ख, सदाचारयतिव्रतः; ड, सदाचारो यतव्रतः ।
6. ङ, देवेशि । 7. ख, आज्ञासिद्धिकरं; ग, घ, आज्ञासिद्धिमिदं ।
8. ख, नापि लोको । 9. क, ग, घ, मार्गस्य ।
10. ङ, सदाचारात् । 11. ङ, परा ।
12. ख, वासनः । 13. ङ, लङ्घनाद्देवि । 14. ङ, द्रव्य ।
15. क, ख, मन्त्रतन्त्रादिलोपजम्; ङ, मन्त्रतन्त्रादिलोपनं ।
16. ख, अनर्हे पशुदुःसङ्गं मन्त्रसंस्कारसम्भवम्; ग, घ, अनर्हे पशुदुःसङ्गं मन्त्रसंस्कार्यसम्भवं ।

गुप्त[1]प्रकटसम्भूतं ज्ञानाज्ञानकृतं प्रिये ।
एवमादिषु दोषेषु पापस्य गुरुलाघवम्[2] ॥ १०३ ॥
देशं कालं वयो वित्तं[3] सम्यग् ज्ञात्वा यथाविधि ।
प्रायश्चित्तं गुरुर्दद्यात्[4] सर्वपापविशुद्धये ॥ १०४ ॥
शिष्योऽपि गुरुणाऽऽज्ञप्तं[5] प्रायश्चित्तं समाचरेत् ।
अथवा सर्वपापानां गुरुनामजपः स्मृतः ॥ १०५ ॥
जाम्बूनदस्य[6] कलुषं परिशुद्धं यथाग्निना ।
अनाचारस्य मालिन्यं[7] प्रायश्चित्ताग्निना दहेत् ॥ १०६ ॥
बहुनात्र किमुक्तेन रहस्यं शृणु पार्वति ।
वर्णाश्रमाणां सर्वेषामाचारः सद्गतिप्रदः ॥ १०७ ॥
गुरुस्त्रिवारमाचारं कथयेच्च कुलेश्वरि ।
न गृह्णाति हि शिष्यश्चेत्तदा पापं गुरोर्न हि ॥ १०८ ॥
मन्त्रिदोषश्च राजानं जायादोषः पतिं यथा ।
तथा प्राप्नोत्यसन्देहं शिष्यपापं गुरुं[8] प्रिये ॥ १०९ ॥
इति ते कथितं किञ्चित् समासेन कुलेश्वरि[9] ।
कुलाचारविधिं देवि किम्भूयः श्रोतुमिच्छसि ॥ ११० ॥

इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये
सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चम-
खण्डे ऊर्द्ध्वाम्नायतन्त्रे कुलाचारकथनं
नाम एकादश उल्लासः ।

---

1. ख, गुप्तं ।
2. ख, पापेभ्यः पतनं भवेत् । 3. ख, कालञ्च योग्यत्वं ।
4. घ, गुरोः कुर्यात् । ङ, गुरुः कुर्यात् ।
5. ग, घ, प्रोक्तं ; ङ, शिष्येभ्यो देववत् प्रोक्तः ।
6. ङ, साक्षादस्य हि । 7. ङ, अनाचारमरण्यन्तु ।
8. ङ, गुरुः । 9. क, ग, घ, वरानने ।

# द्वादश उल्लासः ।

श्रीदेव्युवाच ।

कुलेश श्रोतुमिच्छामि पादुका[1] भक्तिलक्षणम् ।
आचारमपि देवेश वद मे करुणानिधे ॥ १ ॥

ईश्वर उवाच ।

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण भक्तिराशु प्रजायते* ॥ २ ॥
वाग्भवा मूलवलये शूद्राद्याः करणीकृताः[2] ।
एवं कुलार्णवे ज्ञानं[3] पादुकायां प्रतिष्ठितम् ॥ ३ ॥
कोटिकोटिमहादानात् कोटिकोटिमहाव्रतात् ।
कोटिकोटिमहायज्ञात्[4] परा श्रीपादुकास्मृतिः[5] ॥ ४ ॥
कोटिकोटिमन्त्रजापात् कोटितीर्थविगाहनात्[6] ।
कोटिदेवार्चनाद्देवि[7] परा श्रीपादुकास्मृतिः ॥ ५ ॥
महारोगे महोत्पाते[8] महादोषे महाभये ।
महापदि महापापे स्मृता रक्षति पादुका ॥ ६ ॥
दुराचारे दुरालापे[9] दुःसङ्गे दुष्प्रतिग्रहे[10] ।
दुराहारे च[11] दुर्बुद्धौ स्मृता रक्षति पादुका ॥ ७ ॥

---

* क पुस्तके इतःपरं "प्रथमं परमेशानि योगिनी रुद्रयोगिनी" इति श्लोकार्द्धमधिकं दृश्यते ।

1. ङ, पादुकां । 2. ख, ङ, सूलाद्याः कवलीकृताः ।
3. ख, तदर्णवं ज्ञानं ; ग, घ, कुलार्णवं ज्ञानं ।
4. ङ, महाज्ञानात् । 5. ग, सृतिः ।
6. ख, महाजापात् पुण्यतीर्थविगाहनात् ; ङ, पुण्यतीर्थविगाहनात् ।
7. क, ग, घ, कोटिदेवार्चनं देवि । 8. ख, महातापे ।
9. ङ, दुरालोके । 10. ख, दुष्टसंग्रहे ; ङ, दूष्यसंग्रहे ।
11. ख, दुराचारे च ।

तेनाधीतं स्मृतं ज्ञातम् इष्टं दत्तञ्च[1] पूजितम् ।
जिह्वाग्रे वर्त्तते यस्य सदा[2] श्रीपादुकास्मृतिः ॥ ८ ॥
सकृत्[3] श्रीपादुकां देवि यो वा जपति[4] भक्तितः ।
स सर्वपापरहितः प्राप्नोति परमां[5] गतिम् ॥ ९ ॥
शुचिर्वाप्यशुचिर्वापि भक्त्या स्मरति पादुकाम् ।
अनायासेन धर्मार्थकाममोक्षान् लभेत सः ॥ १० ॥
श्रीनाथचरणाम्भोजं यस्यां दिशि विराजते ।
तस्यां दिशि[6] नमस्कुर्यात् भक्त्या प्रतिदिनं प्रिये ॥ ११ ॥
न पादुकापरो मन्त्रो न देवः श्रीगुरोः परः[7] ।
न हि शाक्तात् परा दीक्षा[8] न पुण्यं कुलपूजनात्* ॥ १२ ॥
ध्यानमूलं गुरोर्मूर्त्तिः पूजामूलं गुरोः पदम् ।
मन्त्रमूलं[9] गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा ॥ १३ ॥
गुरुमूलाः क्रियाः सर्वा लोकेऽस्मिन् कुलनायिके ।
तस्मात् सेव्यो[10] गुरुर्नित्यं सिद्ध्यर्थं भक्तिसंयुतैः ॥ १४ ॥
तावदार्त्तिर्भयं शोको लोभमोहभ्रमादयः[11] ।
यावन्नायाति शरणं श्रीगुरुं भक्तवत्सलम् ॥ १५ ॥
तावद् भ्रमन्ति संसारे सर्वदुःखमलीमसाः[12] ।
न भवेत् सद्गुरौ भक्ति[13]र्यावद्देवेशि देहिनाम् ॥ १६ ॥

---

* ख पुस्तके श्लोकार्द्धमिदं नास्ति ।

1. क, इष्टं पदञ्च ; ग, ज्ञानं दृष्टं ; घ, ज्ञानम् इष्टं ; ङ, दृष्टं दत्तञ्च ।
2. ख, ङ, परा ।  3. ख, कृतं ।
4. ङ, वदति ।  5. ग, घ, पादुकां ।
6. ङ, तस्यै दिशे ।  7. क, श्रीगुरोरपि ।
8. ङ, न हि शास्त्रात् परं ज्ञानं ।  9. क, मूलमन्त्रं ।
10. ग, परो ।
11. क, तावदार्त्तिभयं दुःखं महाशोकभ्रमादयः ; ग, महाशोकभ्रमादयः ।
12. ख, सर्वदुःखमनीषया ।  13. ङ, श्रीगुरुर्भक्ति ।

सर्वसिद्धिफलोपेतो मन्त्रः शुध्यति शोभनः[1]* ।
गुरुप्रसादमूलोऽयं परतत्त्वमहाक्रमः[2] ॥ १७ ॥
यथा[3] ददाति सन्तुष्टः प्रसन्नो वरदो मनुम् ।
तथा[4] भक्त्या धनैः प्राणैर्गुरुं यत्नेन तोषयेत् ॥ १८ ॥
यदा दद्यात् स्वशिष्याय[5] स्वात्मानं देशिकोत्तमः ।
तदा मुक्तो भवेच्छिष्यस्ततो नास्ति पुनर्भवः ॥ १९ ॥
तावदाराधयेच्छिष्यः प्रसन्नोऽसौ यदा[6] भवेत् ।
गुरौ प्रसन्ने शिष्यस्य सद्यः[7] पापक्षयो भवेत् ॥ २० ॥
मनसापि न काङ्क्षन्ते[8] यान् कामाननु[9]जीविनः ।
सम्पादयन्ति[10] तान् सर्वान् स्वामिनो भक्तवत्सलाः ॥२१॥
ब्रह्मविष्णुमहेशादिदेवतामुनियोगिनः ।
कुर्वन्त्यनुग्रहं तुष्टा गुरौ तुष्टे न संशयः ॥ २२ ॥
[11]भक्त्या तुष्टेन गुरुणा यः प्रदिष्टः[12] कृपालुना ।
कर्ममुक्तो[13] भवेच्छिष्यो भुक्तिमुक्त्योः स भाजनम् ॥ २३ ॥
शिष्येणापि तथा कार्यं[13] यथा सन्तोषितो गुरुः[15] ।
प्रियं कुर्याच्च देवेशि[16] मनोवाक्कायकर्मभिः ॥ २४ ॥

---

* ख पुस्तके इतःपरं "सर्वसिद्धिफलोपेतस्तावन्मन्त्रो न सिद्ध्यति" इति श्लोकार्द्धमधिकं दृश्यते ।

1. ख, ग, यन्त्रमन्त्रोऽति शोभनः ।
2. ङ, महात्मनः ।
3. ङ, यदा ।
4. ङ, तदा ।
5. ङ, स्वशिष्येभ्यः ।
6. ख, यथा ।
7. ङ, सर्व ।
8. ङ, काङ्क्षेत ।
9. क, कामांस्तूप; ङ, न्नव ।
10. ग, प्रसादयन्ति ।
11. ङ, भक्त्या सन्तुष्टगुरुणा योपदिष्टः कृपात्मना ।
12. ग, घ, यदि तुष्टः ।
13. ङ, कर्ममोक्षो ।
14. क, ग, घ, तदा ग्राह्यं; ङ, ततो ग्राह्यं ।
15. क, ग, घ, यदा सन्तोषयेद् गुरुः; ख, सदा सन्तोष्यते गुरुः ।
16. क, ख, ग, घ, तस्माद् गुरोः प्रियं कुर्वन् ।

यदि तुष्टेन गुरुणात्मशिष्यो[1] यत्र कुत्रचित् ।
मुक्तोऽसीति समादिष्टः[2] सोऽपि मुक्तिं व्रजेत् प्रिये ॥ २५ ॥
अथवा निष्प्रपञ्चेन धाम्ना केनचिदीश्वरः[3] ।
करोति गुरुरूपेण पशुपाशविमोचनम् ॥ २६ ॥
न[4] मे प्रियश्चतुर्वेदी मद्भक्तः श्वपचोऽपि वा[5] ।
तस्मै देयं ततो ग्राह्यं स तु पूज्यो ह्यहं यथा ॥ २७ ॥
विप्रः षड्गुणयुक्तश्चेदभक्तो[6] न प्रशस्यते ।
म्लेच्छोऽपि गुणहीनोऽपि भक्तिमान् शिष्य[7] उच्यते ॥ २८ ॥
गुरुभक्तिविहीनस्य तपो विद्या कुलं[8] व्रतम्* ।
सर्वं नश्यति तत्रैव भूषणं लोकरञ्जनम्[9] ॥ २९ ॥
गुरुभक्त्यग्निना सम्यग्दग्धदुर्मतिकल्मषः[10] ।
श्वपचोऽपि परैः पूज्यो[11] विद्वानपि न नास्तिकः ॥ ३० ॥
धर्मार्थकामैः किन्तस्य मोक्ष एव करे स्थितः[12] ।
सर्वार्थैः श्री[13]गुरौ देवि यस्य भक्तिः सदा स्थिरा ॥ ३१ ॥
स शिवो गुरुरूपेण भुक्तिमुक्तिप्रदो मम[14] ।
इति भक्त्या स्मरेद् यस्तु तस्य सिद्धिरदूरतः[15] ॥ ३२ ॥
यस्य देवे[16] परा भक्तिर्यथा देवे तथा गुरौ ।
तस्य ते[17] कथिता ह्यर्थाः प्रकाशन्ते कुलेश्वरि ॥ ३३ ॥

---

* क, ग, घ पुस्तकेषु सार्द्धश्लोकोऽयं न दृश्यते ।

1. ख, घ, यदि वा परितुष्टेन गुरुणा; ङ, यदि वा परितुष्येत गुरुणा । 2. ङ, समुद्दिष्टः ।
3. ग, घ, येन चिदीश्वरः; ङ, धार्मिकेण चिदीश्वरि ।
4. क, ग, घ, स । 5. ङ, श्वपचः प्रियः ।
6. क, ङ, विप्रोऽपि गुणयुक्तो वाप्यभक्तो; ग, ब्राह्मणो गुणयुक्तो वाप्यभक्तो । 7. ग, शिव । 8. ख, फलं । 9. ख, देवेशि भुवनं नोपपद्यते । 10. ङ, सम्यग्दग्ध्वा सर्वगतिर्नरः ।
11. ख, परे युक्तो । 12. ख, धर्मार्थकाममोक्षाश्च सर्वे तस्य करे स्थिताः । 13. ख, सर्वभावे; ङ, सर्वोपायैर्गुरौ ।
14. ख, भवेत् । 15. ख, रनुत्तमा । 16. ख, ङ, देवि ।
17. क, ग, तस्मै ते; ङ, तस्यैव ।

नारायणे महादेवे मातापित्रोश्च राजनि ।
भक्तिर्यथा महादेवि[1] तथा कार्या निजे गुरौ ॥ ३४ ॥
लक्ष्मीनारायणौ वाणीधातारौ गिरिजाशिवौ ।
श्रीगुरुं गुरुपत्नीञ्च पितराविति चिन्तयेत् ॥ ३५ ॥
गुरुभक्त्या यथा देवि प्राप्यन्ते[2] सर्वसिद्धयः ।
यज्ञः[3]दानतपस्तीर्थव्रताद्यैर्न तथा प्रिये ॥ ३६ ॥
श्रीगुरौ निश्चला भक्ति[4]र्वर्द्धते हि यथा यथा ।
तथा तथास्य[5] विज्ञानं वर्द्धते कुलनायिके ॥ ३७ ॥
किं तीर्थाद्यैर्महायासैः किं व्रतैः कायशोषणैः[6]
निर्व्याजसेवा देवेशि भक्तिरेषा हि सद्गुरोः[7] ॥ ३८ ॥
कायक्लेशेन महता तपसा वापि यत् फलम् ।
तत् फलं लभते देवि सुखेन गुरुसेवया ॥ ३९ ॥
भोगमोक्षार्थिनां ब्रह्मविष्णूीशपदकाङ्क्षिणाम् ।
भक्तिरेव गुरौ देवि नान्यः पन्था इति श्रुतिः[8] ॥ ४० ॥
अशुभानि च कर्माणि महापातकजानि[9] च ।
भक्तिः क्षणेन दहति तूल[10]राशिमिवानलः ॥ ४१ ॥
विश्वासाय नमस्तस्मै सर्वसिद्धिप्रदायिने ।
येन मृद्दारुदृषदः फलन्त्यविफलं फलम्[11] ॥ ४२ ॥
न योगो न तपो नार्चाक्रमः कोऽपि प्रलीयते ।
अमाये कुलमार्गेऽस्मिन्[12] भक्तिरेव विशिष्यते[13] ॥ ४३ ॥

---

1. क, यथाशक्तिर्भवेद्देवि । 2. ङ, प्रार्थन्ते ।
3. ङ, सर्व । 4. ख, बुद्धि । 5. ङ, तथान्य ।
6. क, कायरोधनैः ; ख, कायशोधनैः ।
7. ङ, भक्तिर्येषां निजे गुरौ । 8. ख, न विद्यते ।
9. ङ, सुमहापातकानि । 10. ख, तृण ।
11. ख, येन सृष्टानि तत्कालं फलन्त्वविकलं फलं ।
12. ङ, अमायाकुलमार्गेण । 13. क, ग, घ, भक्तिरेव हि सद्गुरोः ।

साक्षाद् गुरुमये देवि सर्वस्मिन्[1] भुवनान्तरे ।
किन्नु[2] भक्तिमतां क्षोले मन्त्रः केषां न सिध्यति ॥ ४४ ॥
गुरौ मनुष्यबुद्धिञ्च मन्त्रे चाक्षरबुद्धिकम् ।
प्रतिमासु शिलाबुद्धिं कुर्वाणो नरकं व्रजेत् ॥ ४५ ॥
गुरुं न मर्त्यं बुध्येत यदि बुध्येत तस्य हि ।
न कदाचिद्भवेत् सिद्धिर्मन्त्रैर्वा देवतार्चनैः ॥ ४६ ॥
श्रीगुरुं प्राकृतैः सार्द्धं ये स्मरन्ति वदन्ति च ।
तेषां हि सुकृतं सर्वं पातकं भवति प्रिये ॥ ४७ ॥
जन्महेतू हि पितरौ पूजनीयौ प्रयत्नतः ।
गुरुर्विशेषतः पूज्यो धर्माधर्मप्रदर्शकः ॥ ४८ ॥
गुरुः पिता गुरुर्माता गुरुर्देवो महेश्वरः[3] ।
शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ ४९ ॥
गुरोर्हितं हि कर्त्तव्यं मनोवाक्कायकर्मभिः ।
अहिताचरणाद्देवि विष्ठायां जायते क्रिमिः ॥ ५० ॥
शरीरवित्तप्राणैश्च श्रीगुरुं वञ्चयन्ति ये[4] ।
क्रिमिकीटपतङ्गत्वं प्राप्नुवन्ति न संशयः ॥ ५१ ॥
मन्त्र[5]त्यागाद्भवेन्मृत्युर्गुरु[6]त्यागाद्दरिद्रता ।
गुरुमन्त्रपरित्यागाद्रौरवं[7] नरकं व्रजेत् ॥ ५२ ॥
गुर्वर्थं धारयेद्देहं तदर्थं[8] धनमर्जयेत् ।
निजप्राणान् परित्यज्य गुरुकार्यं समाचरेत् ॥ ५३ ॥
गुरूक्तं परुषं वाक्यमाशिषं परिचिन्तयेत् ।
तेन सन्ताडितो वापि प्रसादमिति संस्मरेत् ॥ ५४ ॥
भोग्य[9]भोज्यानि वस्तूनि गुरवे च समर्पयेत् ।
तच्छेषमिति सञ्चिन्त्य चानुभूयात् कुलेश्वरि[10] ॥ ५५ ॥

---

1. ङ, सर्वेऽस्मिन् । 2. ख, ङ, किन्तु ।
3. ङ, गुरुर्गतिः । 4. ख, शरीरजीवितप्राणाः श्रीगुरोर्वञ्चयन्ति ये ।
5. ङ, गुरु । 6. ङ, मन्त्र । 7. क, ख, परित्यागी रौरवं ।
8. ङ, गुर्वर्थं । 9. ङ, भोग । 10. ङ, सुरेश्वरि ।

गुर्वग्रे न तपः कुर्यान्नोपवासव्रतादिकम् ।
तीर्थयात्रां न कुर्याच्च[1] न स्नायादात्मशुद्धये ॥ ५६ ॥
न नियोगं गुरोः कुर्यात्[2] युष्मदा नैव भाषयेत् ।
ऋणदानं तथाऽऽदानं वस्तूनां क्रयविक्रयं[3] ।
न कुर्याद् गुरुभिः सार्द्धं शिष्यो भूत्वा कथञ्चन ॥ ५७ ॥
न कुर्यान्नास्तिकैर्वादं[4] सम्भाषणमपीश्वरि ।
विलोक्य दूरतो गच्छेन्नासीत सह तैः क्वचित् ॥ ५८ ॥
गुरौ सन्निहिते यस्तु पूजयेदन्यमम्बिके ।
स याति नरकं घोरं[5] सा पूजा निष्फला भवेत् ॥ ५९ ॥
शिरसा न वहेद्भारं गुरुपादाब्जधारिणा ।
तदाज्ञया तु कर्त्तव्यमाज्ञारूपो गुरुः स्मृतः ॥ ६० ॥
मन्त्रागमाद्यमन्यत्र श्रुतं तस्मै निवेदयेत् ।
गुर्वाज्ञया तु गृह्णीयात्तन्निषिद्धं विवर्जयेत्[6] ॥ ६१ ॥
स्वशास्त्रोक्तं रहस्यार्थं[7] न वदेद् यस्य कस्यचित् ।
यदि ब्रूयात् स समयाच्च्युत[8] एव न संशयः ॥ ६२ ॥
अद्वैतं भावयेन्नित्यं न द्वैतं[9] गुरुणा सह ।
आत्मवत् सर्वभूतेभ्यो[10] हितं कुर्यात् कुलेश्वरि ॥ ६३ ॥
आत्मार्थमानसद्भावैः शुश्रूषा[11] स्याच्चतुर्विधा ।
शुश्रूषया धिया देवि शिष्यः सन्तोषयेद् गुरुम् ॥ ६४ ॥
पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयः ।
शुश्रूषणपरो यस्तु गुरुदेवमहात्मनाम् ॥ ६५ ॥

---

1. ख, समागत्य ।
2. क, गुरौ कुर्यात्; ङ, गुरौ दद्यात्; ग, घ, गुरोर्दद्यात् ।
3. ङ, क्रयविक्रयौ । 4. ङ, नास्तिकैः सार्द्धं ।
5. ङ, नरके घोरे । 6. क, त्तदनिष्टं विवर्जयेत्; ख, गुर्वाज्ञया तु कर्त्तव्यं निषिद्धं वर्जयेत् सदा; ङ, त्तदानिष्टं । 7. ङ, रहस्याद्यं ।
8. ङ, स स मया वाच्य ।
9. ङ, मद्वैतं । 10. क, गुरुणा सार्द्धं; ख, ङ, सर्वभूतेषु ।
11. ङ, आत्मात्ममानसद्भावैः सुक्रिया ।

केवलं[1] गुरुशुश्रूषा त्वत्कृपाकारिणी प्रिये ।
सद्भक्तिसहिता चेत् सा सर्वकामफलप्रदा[2] ॥ ६६ ॥
क्षीयन्ते सर्वपापानि वर्द्धन्ते पुण्यराशयः ।
सिध्यन्ति सर्वकार्याणि गुरुशुश्रूषया प्रिये ॥ ६७ ॥
यद् यदात्महितं वस्तु तत्तद्धितमुपाचरेत्[3] ।
गुरुदेवार्चको[4] यस्तु तस्य पुण्यं न गण्यते ॥ ६८ ॥
भक्त्या वित्तानुसारेण गुरुमुद्दिश्य यत् कृतम्[5] ।
अल्पे महति वा तुल्यं पुण्य[6]माढ्यदरिद्रयोः ॥ ६९ ॥
सर्वस्वमपि यो दद्याद् गुरौ भक्तिविवर्जितः ।
शिष्यो न फलमाप्नोति भक्तिरेव हि कारणम् ॥ ७० ॥
यस्मिन् द्रव्ये गुरोरस्ति स्पृहा[7] नानुभवेत्तु तत् ।
अवश्यं यदि वाञ्छा स्यादनुभूयात्तदाज्ञया ॥ ७१ ॥
यस्तिलार्द्धं तदर्द्धं वा गुरुस्वमुपजीवति ।
लोभान्मोहात्[8] स पच्येत नरके च त्रिसप्तके[9] ॥ ७२ ॥
अत्यल्पं हि गुरोर्द्रव्यमदत्तं स्वीकरोति यः ।
स तिर्यग्[10]योनिमापन्नः क्रव्यादैर्भक्ष्यते[11] प्रिये ॥ ७३ ॥
गुरुद्रव्याभिलाषी च गुरुस्त्रीगमनोत्सुकः ।
पतितस्य क्षुल्लकस्य[12] प्रायश्चित्तं न विद्यते ॥ ७४ ॥
आज्ञाभङ्गोऽर्थहरणं गुरोरप्रियवर्त्तनम्[13] ।
गुरुद्रोहमिदं प्राहुर्यः करोति स[14] पातकी ॥ ७५ ॥

---

1. ङ, कुवलं ।
2. ङ, तद्भक्तिसहिताः सर्वे सर्वकामफलप्रदाः ।
3. ख, ग, घ, तत्तद्धित्तमवञ्चयन् ।
4. ख, गुरुदेवात्मको ।
5. ङ, यत् फलं ।
6. क, अल्पमेव महत् पुण्यं तुल्य ।
7. ख, कृपा ।
8. क, महालोभात् ।
9. ङ, त्रिसप्तकं
10. ङ, तिरश्चां ।
11. ङ, भक्षयेद् ।
12. ख, च म्लेच्छस्य; घ, च क्षुब्धस्य; ङ, खलु तस्य ।
13. ङ, दर्शनं ।
14. क, ख, घ, यः कुर्यात् स तु ।

स्वद्रव्यविनियोगञ्च नानिवेद्य गुरौ चरेत्[1]।
अनिवेद्य तु यः कुर्यात् स भवेद् ब्रह्मघातकः ॥ ७६ ॥
गुरोः स्थानं सम्प्रदायं तद्धर्म[2] यो विनाशयेत्।
गुरुभिः स बहिष्कार्यो दण्डयो वध्यः स घातकैः[3] ॥ ७७ ॥
गुरुकोपाद्विनाशः स्याद् गुरुद्रोहात्तु पातकम्[4]
विमृत्युर्गुरुनिन्दायां गुर्वनिष्टान्महापदः[5] ॥ ७८ ॥
जीवेदग्निप्रविष्टो वा नरः पीतविषोऽपि वा।
मृत्युहस्तगतो वापि नापराधकरो[6] गुरोः[7] ॥ ७९ ॥
यत्र श्रीगुरुनिन्दा स्यात् पिधाय श्रवणेऽम्बिके[8]।
सद्यस्तस्माद्विनिष्क्रामेत् पुनर्न श्रवणं यथा[9]।
गुरोर्नाम स्मरेत्[10] पश्चात् श्रवणे सा प्रतिक्रिया ॥ ८० ॥
गुरुमित्रसुहृद्दासीदासाद्यान्[11] नावमानयेत्।
न निन्देदस्य समयान् वेदशास्त्रा[12]गमादिकान् ॥ ८१ ॥
गुरोः श्रीपादुकाभूषा[13] गुरुनाम[14]स्मृतिर्जपः।
गुर्वाज्ञाकरणं कृत्यं शुश्रूषा भजनं[15] गुरोः ॥ ८२ ॥
विविक्षुर्देशिकावासं[16] शान्तचित्तोऽतिभक्तिमान्।
वाहनं पादुकां छत्रं चामरं व्यजनादिकम्।
ताम्बूलं कज्जलं वेश[17]मुत्सृज्य प्रविशेच्छनैः ॥ ८३ ॥

---

1. क, ख, ग, घ, न निवेद्य; ङ, सुद्रव्यविनियोगश्च नानिवेद्य गुरोश्चरेत्। 2. ङ, तद्धनं।
3. क, ग, घ, दण्डयो वध्यश्च घातकः; ङ, दण्डयोऽधन्यः स पातकी। 4. ङ, गुरुकोपाद्विनाशोऽन्यो गुरुद्रोहान्न पातकं।
5. ङ, न मृतिर्गुरुनिन्दायां गुर्वनिष्टान्न चापदः।
6. क, नापवादकरो। 7. ङ, गुरौ। 8. ग, घ, श्रवणे स्वके।
9. क, गुरु न श्रवणं यथा; ग, घ, दूरं न श्रवणं यथा; ङ, सद्यस्तस्मादुपक्रामेद्दूरं न शृणुयाद् यथा। 10. ङ, जपेत्।
11. ङ, सुहृत्पत्नीपुत्राद्यं। 12. ङ, नैतच्छास्त्रा।
13. ख, भूत्वा; ङ, पूजा। 14. ख, ङ, पाद।
15. ग, सुक्रमाद्भजनं। 16. ङ, देशिको भूयात्।
17. ङ, ताम्बूलमूलकोष्णीष।

पादुकामासनं वस्त्रं वाहनं छत्रचामरे[1] ।
दृष्ट्वा गुरोर्नमस्कुर्यान्नात्मभोगाय[2] कामयेत् ॥ ८४ ॥
पादप्रक्षालनं स्नानमभ्यङ्गं दन्तधावनम् ।
मूत्रं निष्ठीवनं क्षौरं शयनं स्त्रीनिषेवनम् ॥ ८५ ॥
वीरासनं सुदुर्वाक्यं शासनं हास्यरोदनम्[3] ।
केशमोचनमुष्णीषं कञ्चुकं नग्नतां तथा ॥ ८६ ॥
पादप्रसारणं वादं कलहं दूषणं प्रिये ।
अङ्गभङ्गाङ्गवाद्यादिकरास्फालनधूननम् ॥ ८७ ॥
द्यूतकौतुक[4]मल्लादियुद्धनृ[5]त्यादि चाम्बिके ।
गुरुयोगि[6]महासिद्धिपीठक्षेत्राश्रमेषु च ।
ना[7]चरेदाचरेन्मोहाद्देवताशापमाप्नुयात् ॥ ८८ ॥
उपचारेण सन्तिष्ठेद्[8]गुर्वग्रे नेच्छया विशेत् ।
मुखावलोकी[9] सेवेत तदुक्तञ्च समाचरेत् * ॥ ८९ ॥
गुरूक्तानुक्त[10] कार्येषु नोपेक्षां कारयेत् प्रिये ।
शिरसा यद्गुरुर्ब्रूयात्तत् कार्यमविशङ्कया[11] ॥ ९० ॥
निग्रहेऽनुग्रहे[12]वापि गुरुः सर्वस्य कारणम् ।
निर्गतं यद्गुरोर्वक्त्रात् सर्वं शास्त्रं तदुच्यते ॥ ९१ ॥
गुरुकार्ये स्वयं शक्तो नापरं प्रेषयेत् प्रिये ।
बहुभृत्यपरैर्भृत्यैः[13] सहितोऽप्यतिभक्तिमान्[14] ॥ ९२ ॥

---

* क पुस्तके श्लोकार्द्धमिदं न दृश्यते ।

1. ग, ङ, चामरं । 2. ङ, नानुभोगाय । 3. ख, वादनं ।
4. ख, ग, ङ, कुक्कुट । 5. ग, घ, मुग्घमि ।
6. ख, ग, सिद्धि । 7. ङ, मा ।
8. क, ख, ग, घ, उपचारं विना तिष्ठेद् ।
9. ङ, अथावलोकी । 10. घ, गुरुभक्तानु ।
11. ङ, तत् कार्यमविचारतः । 12. ङ, निग्रहोऽनुग्रहो ।
13. ङ, बहुत्वे तत्परैर्भृत्यैः । 14. क, भक्तिमान् ।

गच्छंस्तिष्ठन् स्वपन् जाग्रज्जपन् जुह्वत् प्रपूजयेत्[1] ।
गुर्वाज्ञामेव कुर्वीत तद्गतेनान्तरात्मना ॥ ९३ ॥
अभिमानो न कर्त्तव्यो जातिविद्याधनादिभिः ।
सर्वदा सेवयेत्[2] नित्यं शिष्यः श्रीगुरुसन्निधौ ॥ ९४ ॥
कामक्रोधपरित्यागी विनीतः स्तुतिभक्तिमान् ।
देवि भूम्यासने तिष्ठेद्[3]गुरुकार्यं समाचरेत्[4] ॥ ९५ ॥
स्वकार्यमन्यकार्यं वा शिष्यः स्वगुरुचित्तवित् ।
गुरुपार्श्वगतो नम्रः प्रसन्नवदनो भवेत्[5] ॥ ९६ ॥
सामान्यतो निषिद्धञ्च तद्गुरो[6]र्यदि सन्निधौ ।
आचरेत्तस्य सर्वस्य[7] दोषः कोटिगुणो भवेत् ॥ ९७ ॥
अनादृत्य गुरोर्वाक्यं शृणुयाद् यः पराङ्मुखः ।
अहितं वा हितं वापि रौरवं नरकं व्रजेत् ॥ ९८ ॥
गोब्राह्मणवधं कृत्वा यत् पापं समवाप्नुयात् ।
तत् पापं समवाप्नोति गुर्वग्रेऽनृतभाषणात् ॥ ९९ ॥
स्थानान्तरगते चार्थे व्यसने विषमे स्थिते[8] ।
श्रीगुरुं न त्यजेत् क्वापि तदादिष्टो व्रजेत् प्रिये ॥ १०० ॥
अधः स्थिते गुरावूर्द्ध्वे न तिष्ठेत कदाचन* ।
न गच्छेदग्रतस्तस्य न तिष्ठे[9]दुत्थिते गुरौ ॥ १०१ ॥
शक्तिच्छायां सुरच्छायां गुरुच्छायां न लङ्घयेत् ।
न तेषु कुर्यात् स्वच्छायां न स्वपेद् गुरुसन्निधौ ॥ १०२ ॥
भाषणं पाठनं गानं[10] भोजनं शयनादिकम् ।
अनादिष्टो न कुर्वीत न चावन्दनपूर्वकम् ॥ १०३ ॥

---

* ङ पुस्तके श्लोकार्द्धमिदं न दृश्यत ।

1. ङ, प्रपूजयन् । 2. ङ, सदा च निवसेत् ।
3. ख, श्रद्धासने; क, ग, घ, अध्यासने तिष्ठन् ।
4. ख, ग, गुरुकार्यसमुत्सुकः । 5. ङ, प्रच्छन्नास्यो मितं वदेत् ।
6. ङ, निषेधञ्च सद्गुरो । 7. ख, ग, आचरेद् यदि मूढात्मा ।
8. ख, स्थितं; ङ, आत्मनान्तगतेनाथ ।
9. घ, ङ, न वसे । 10. ख, शयनं; ङ, स्नानं ।

ब्रह्महत्याशतं कुर्यात् गुर्वाज्ञापरिपालनात्[1]।
विना गुर्वाज्ञया शिष्यो विश्वसेन्नान्यशासनात् ॥ १०४ ॥
सर्वं गुर्वाज्ञया कुर्यान्न निन्दे[2]त्तत्स्त्रियं प्रिये।
भक्त्या प्रणम्य चोत्तिष्ठेत् कृताञ्जलिपुटः प्रिये ॥ १०५ ॥
पश्चात्पदेन निर्गच्छेन्नमस्कृत्य गुरोर्गृहात्।
एकासने नोपविशेद् गुरुणा तत्समैः सहं ॥ १०६ ॥
न विशेदासने[3] देवि देवतागुरुसन्निधौ।
गुरोः सिंहासनं[4] देयं ज्येष्ठानामुत्तमासनम्।
देश्यासनं कनिष्ठानामितरेषां समासनम् ॥ १०७ ॥
जाति[5]विद्याधनाढ्यो वा दूरे दृष्ट्वा गुरुं मुदा[6]।
दण्डप्रणामं कृत्वैकं[7] त्रिः प्रदक्षिणमाचरेत् ॥ १०८ ॥
ततस्त्रिः षड् द्वादश वा[8] ज्येष्ठादिष्वेकमेव वा।
गुरुप्रगुरुयोगेन[9] वन्देत प्रगुरुं प्रिये[10] ॥ १०९ ॥
ततो नमेद् गुरुं वापि गुर्वाज्ञां न विचारयेत्[11]।
प्रगुरोः सन्निधौ शिष्यः स्वगुरुं[12] मनसा नमेत् ॥ ११० ॥
गुरुबुद्ध्या नमेत् सर्वं दैवतं[13] तृणमेव वा।
न नमेद्देवबुद्ध्या तु प्रतिमां लौहमृण्मयीम् ॥ १११ ॥
गुरोः प्रणामत्रितयं ज्येष्ठानामेक एव च।
पूज्यानामञ्जलिस्तद्व[14]दन्येषां वाक्यवन्दनम् ॥ ११२ ॥

---

1. क, ग, गुर्वाज्ञामप्रपालयन्; ङ, गुर्वाज्ञां प्रतिपालयेत्।
2. ख, ग, घ, न्नालिङ्गेत्तत्स्त्रियं। 3. घ, ङ, न वसेदासने।
4. ङ, श्रेष्ठासनं। 5. ङ, यदि। 6. ङ, स्तवादिना।
7. ङ, कुर्वीत। 8. ख, ततस्त्रिषड् वा दश वा; ङ, तत्त्रिशद्वा द्वादश वा।
9. ख, ङ गुरुस्तद्गुरुयोगेन।
10. ख, घ, वन्देत स्वगुरुं; ङ, वन्देत् श्रीगुरुपादुकां।
11. क, ख, ग, घ, ततो नमेद् गुरुं सोऽपि गुर्वाज्ञातं निवारयेत्।
12. ङ, श्रीगुरोः सन्निधौ शिष्यो न गुरुं।
13. ङ, देवतां। 14. ङ, मञ्जलिं तद्व।

देवान् गुरून्[1] कुलाचार्यान् ज्ञानवृद्धान् तपोधनान् ।
विद्याधिकान् स्वधर्मस्थान्[2] प्रणमेत् कुलनायिके ॥ ११३ ॥
स्त्रीद्विष्टं[3] गुरुभिः शप्तं पाषण्डं पण्डितं शठम् ।
विकर्माणं कृतघ्नञ्चानाश्रमिणञ्च[4] नो नमेत् ॥ ११४ ॥
अनिवेद्य गुरोर्भुङ्क्ते[5] यस्त्वेकग्रामसंस्थितः[6] ।
अमेध्यं तद्भवेदन्नं शूकरो जायते मृतः ॥ ११५ ॥
एकग्रामस्थितः शिष्यस्त्रिसन्ध्यं प्रणमेद् गुरुम् ।
क्रोशमात्रस्थितः शिष्यो गुरुं प्रतिदिनं नमेत् ॥ ११६ ॥
अर्द्धयोजनगः[7] शिष्यः प्रणमेत् पञ्चपर्वसु ।
एकयोजनमारभ्य योजनद्वादशावधि ॥ ११७ ॥
तत्संख्यादिवसैर्मासैः श्रीगुरुं प्रणमेत् प्रिये ।
दूरदेशस्थितः शिष्यो[8] भक्त्या तत्सन्निधिं गतः ॥ ११८ ॥
तत्र योजनसंख्योक्तमासेन[9] प्रणमेद् गुरुम् ।
अतिदूरगतः शिष्यो यदेच्छा स्यात्तदा व्रजेत् ॥ ११९ ॥
रिक्तहस्तश्च नोपेयाद्राजानं देवतां गुरुम् ।
फलपुष्पाम्बरादीनि[10] यथाशक्त्या समर्पयेत्[11] ॥ १२० ॥
एवं यो न चरेद्देवि ब्रह्मराक्षसतां व्रजेत् ।
गुरुशक्तिश्च तत्पुत्रो ज्येष्ठभ्राता गुरुः स्मृतः[12] ॥ १२१ ॥
आत्मविच्च कनीयांसं पुत्रवत् परिपालयेत्[13] ।
कुलाचार्यस्य[14] देवेशि गुरुज्येष्ठकनिष्ठयोः ।
गुरुकल्पस्य कुर्वीत प्रणामं स्वगुरोर्यथा ॥ १२२ ॥

---

1. ङ, पितृन् । 2. ङ, स्वकर्मस्थान् ।
3. ख, स्त्रीदुष्टं ; ङ, स्त्रीजितं । 4. ङ, कृतघ्नञ्च नाश्रमिणञ्च ।
5. ख, गुरोर्वक्ले ; ङ, गुरौ भुङ्क्ते ।
6. ङ, यस्त्वेकगृहसंस्थितौ । 7. ख, अर्द्धयोजनतः ।
8. ङ, दूरदेशे स्थिते शिष्ये । 9. ङ, योजनसंख्यातो विशेषात् । 10. ख, म्बराकल्पैः । 11. ङ, समर्चयेत् ।
12. ङ, गुरोः समः । 13. ङ, पालयेत् पुत्रवत् कुलम् ।
14. ख, कौलाचार्यस्य ; ख, तावीचार्यस्य ।

यागज्येष्ठः[1] क्रमज्येष्ठः कुलज्येष्ठस्तृतीयकः ।
गुरुज्येष्ठसुतो[2] देवि इति ज्येष्ठचतुष्टयम् ॥ १२३ ॥
यागज्येष्ठाभिवादेन[3] क्रमिकाष्टाङ्गयोगतः ।
गुरुश्च कुलवृक्षश्च वन्दनीयौ[4] विधानतः ॥ १२४ ॥
पितृमात्रादिसर्वेषु पूज्यकोटिषु बन्धुषु ।
अभ्युत्थानप्रणामाद्यैरव्यक्तो दोषभाग्बहिः[5] ॥ १२५ ॥
यदा त्वाचार्य[6] रूपेण चात्मानं सम्प्रकाशयेत् ।
अभ्युत्थानप्रणामाद्यैर्दोषभाक् स भवेत्तदा[7] ॥ १२६ ॥
पतिर्भूत्वा पशुभ्यश्च प्रणामं यः करिष्यति[8] ।
स महापशुरित्युक्तो देवताशापमाप्नुयात् ॥ १२७ ॥
यो गुरुस्थानकं प्राप्तः पादुकापरिसंख्यया[9] ।
गुरुवत् स तु मन्तव्यो ज्येष्ठैर्वन्द्यो न च प्रिये[10] ॥ १२८ ॥
इति ते कथितं किञ्चित् पादुकाभक्तिलक्षणम्[11] ।
समासेन कुलेशानि किं भूयः श्रोतुमिच्छसि ॥ १२९ ॥

इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये
सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चम-
खण्डे ऊर्ध्वाम्नायतन्त्रे पादुकाकथनं
नाम द्वादश उल्लासः ॥ 12 ॥

---

1. ख, योगज्येष्ठः; ङ, स्वज्येष्ठश्च ।
2. ङ, गुरुज्येष्ठस्ततो । 3. क, ङ, यावज्ज्येष्ठानुवादेन ।
4. ख, गुरवः कुलवृक्षाश्च वन्दनीया; ङ, गुरोश्च कुलवृक्षस्य वन्दनानि ।
5. क, रव्यक्तो दोषभाङ् नहि; ङ, रव्यग्रक्रोधलाघवैः ।
6. ङ, तद् यदाचार्यरूपेण । 7. ङ, द्वेषभाक् स न जायते ।
8. ङ, पशून् पश्चात् प्रणमेत् पशुदेशिकः ।
9. ङ, यो गुरुस्थानमालम्ब्य गुरुदाराभिवन्दनं ।
10. ङ, ज्येष्ठपुत्रेषु च प्रिये । 11. ङ, पादुकां भक्तिलक्षणम् ।

# त्रयोदश उल्लासः।

श्रीदेव्युवाच।

कुलेश श्रोतुमिच्छामि करुणामृतवारिधे।
वक्तुमर्हसि देवेश[1] लक्षणं गुरुशिष्ययोः ॥ १ ॥

ईश्वर उवाच।

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि।
तस्य श्रवणमात्रेण गुरुभावः[2] प्रजायते ॥ २ ॥
दुष्टवंशोद्भवं दुष्टं[3] गुणहीनं विरूपिणम्[4]।
परशिष्यञ्च पाषण्डं षण्डं पण्डितमानिनम् ॥ ३ ॥
हीनाधिकविकाराङ्गं विकलावयवान्वितम्।
पङ्गुमन्धञ्च बधिरं मलिनं व्याधिपीडितम् ॥ ४ ॥
उत्सृष्टं[5] दुर्मुखञ्चापि स्वेच्छावेशधरं प्रिये[6]।
दुर्विकाराङ्गचेष्टादिगतिभाषणवीक्षणम्[7] ॥ ५ ॥
निद्रातन्द्राजडालस्य[8]द्यूतादिव्यसनान्वितम्।
कपाटकुडयस्तम्भादौ तिरोहिततनुं सदा[9] ।*
अन्तर्भक्तिकरं क्षुद्रं[10] बाह्य[11]भक्तिविवर्जितम् ॥ ६ ॥

---

* ङ पुस्तके श्लोकार्द्धमिदं न दृश्यते।

1. ख, मे नाथ। 2. ग, गुरुभक्तिः।
3. ख, नष्टावयविनं क्षुद्रं ; ङ, नष्टान्नयवजं क्षेत्रं।
4. ङ, निरूपितं। 5. ख, ङ, उच्छिष्टं। 6. ङ, परं।
7. ङ, भीषणभीषणं। 8. ख, तन्द्रीजडालस्यरूपं।
9. ख, तिरोहितमतिन्तथा। 10. ख, गूढभक्तिपरंक्षान्तं।
11. ङ, राज्यभक्ति।

व्यलीकवादिनं स्तब्धं[1] प्रोषितं प्रेषकं शठम्[2] ।
धनस्त्रीशुद्धिरहितं निषेध[3]विधिवर्जितम् ॥ ७ ॥
रहस्यभेदकं वापि देवि कार्यविनाशकम्[4] ।
मार्जारवकवृत्तिञ्च रन्ध्रान्वेषणतत्परम् ॥ ८ ॥
मायाविनं कृतघ्नञ्च प्रच्छन्नान्तरदायकम् ।
विश्वासघातकं स्वामिद्रोहिणं पापकारिणम्[5] ॥ ९ ॥
अविश्वासकरं संशयात्मक सिद्ध्यकाङ्क्षिणम्[6] ।*
आततायिनमादित्सुं कोपितं[7] कूटसाक्षिणम् ॥ १० ॥
सर्वप्रतारकं देवि सर्वोत्कृष्टाभिमानिनम् ।
असत्यं निष्ठुरासक्तं ग्राम्यादिबहुभाषिणम्[8] ॥ ११ ॥
दुर्विचार[9]कुतर्कादिकारकं कलहप्रियम् ।
वृथाक्षेपकरं मूर्खं चपलं[10] वाग्विडम्बकम् ॥ १२ ॥
परोक्षे दूषणकरं प्रत्यक्षे प्रियवादिनम् ।
वाग्ब्रह्मवादिनं विद्याचौरमात्मप्रशंसकम्[11] ॥ १३ ॥
गुणासहिष्णुमहितमार्त्त[12] क्रोधनमम्बिके ।
वाचीलं[13] दुर्जनसखं सर्वलोकविगर्हितम् † ॥ १४ ॥
पिशुनं परसन्ताप्यं सम्विदप्रणयं[14] प्रिये ।
स्वक्लेश[15]वादिनं स्वामिद्रोहिणं स्वात्मवञ्चकम् ॥ १५ ॥

---

* ङ पुस्तके श्लोकार्द्धमिदं नास्ति ।

† ङ पुस्तके इत आरभ्य "जातिमानधने गर्ववर्जितं गुरुसन्निधौ" इत्यन्तविंशतिश्लोका न दृश्यन्ते ।

1. ख, किमेकवादिनं क्रूरं ; ङ, शुष्कं । 2. ङ, प्रेषितं प्रेरकं शठं ।
3. ख, विशेष । 4. क, ग, घ, कार्यार्थिसाधकं ; ख, कार्यविघातकं ।
5. ङ, विश्वासघातिनं द्रोहकारिणं पापकर्मिणं ।
6. ख, सिद्धिकाङ्क्षिणं ।
7. ख, कुत्सितं ; ङ, आततायिनमेकाक्षं कुत्सितं ।
8. घ, बहुयाजिनं । 9. ङ, कुविचार । 10. ङ, चार्वाकं ।
11. ख, प्रकर्षकं । 12. ख, माशु ; ङ, मात्म । 13. ख, चार्वाकं ।
14. ख, सम्विदप्रणवं । 5. क, शक्रेश ।

जिह्वोपस्थपरं देवि तस्करं पशुचेष्टितम् ।
अकारणद्वेषहासक्लेशक्रोधादिकारिणम्[1] ॥ १६ ॥
अतिहासमकर्माणं[2] मर्मान्ति[3]परिहासकम् ।
कामुकञ्चातिनिर्लज्जं मिथ्यादुश्चेष्टसूचकम् ॥ १७ ॥
असूयामदमात्सर्यदम्भाहङ्कारसंयुतम् ।
ईर्ष्यापारुष्यपैशुन्यकार्पण्यक्रोधमानसम् ॥ १८ ॥
अधीरं दुःखिनं भीरुमशक्तस्तवमातुरम्[4] ।
अप्रबुद्धमतिं मन्दं मूढं[5] चिन्ताकुलं विटम् ॥ १९ ॥
तृष्णालोभयुतं दीनमतुष्टं[6] सर्वयाचकम् ।
वह्वाशिनं कपटिनं भ्रामकं कुटिलं प्रिये ॥ २० ॥
भक्तिश्रद्धादयाशान्तिधर्माचारविवर्जितम् ।
मातापितृगुरुप्राज्ञसद्वचो[7]हास्यकारकम् ॥ २१ ॥
कुलद्रव्यादिबीभत्सं गुरुसेवाभिमानिनम् ।
स्त्रीद्विष्टं[8] समयभ्रष्टं गुरुशप्तं कुलेश्वरि ।
इत्यादिदुर्गुणोपेतं[9] गुरुः शिष्यं विवर्जयेत् ॥ २२ ॥
सच्छिष्यन्तु कुलेशानि शुभलक्षणसंयुतम् ।
समाधि[10]साधनोपेतं गुणशीलसमन्वितम् ॥ २३ ॥
स्वच्छदेहाम्बरं[11] प्राज्ञं धार्मिकं शुद्धमानसम् ।
दृढव्रतं सदाचारं श्रद्धाभक्तिसमन्वितम्[12] ॥ २४ ॥
दक्षमल्पाशिनं गूढचित्तं निर्व्याजसेवकम् ।
विमृश्यकारिणं वीरं मनोदारिद्र्यावर्जितम्* ॥ २५ ॥

---

* क, ग, घ पुस्तकेषु श्लोकार्द्धमिदं न दृश्यते ।

1. घ, दारुणं ।

2. ख, अतिसाहसकर्माणं । 3. क, ख, कर्मान्ति ।

4. ग, मशक्तं स्तब्धमातुरं ; घ, स्तब्धमार्त्तवं ।

5. ग, घ, गूढं । 6. क, ख, मशुभं । 7. क, सत्वतो ।

8. ख, स्त्रीदुष्टं । 9. क, ग, घ, लक्षणोपेतं । 10 ख, श्रमादि ।

11. ख, स्वच्छदेहं वरं । 12. ख, दयान्वितं ।

सर्वकार्यातिकुशलं स्वच्छं सर्वोपकारिणम् ।
कृतज्ञं पापभीतञ्च साधुसज्जनसम्मतम् ॥ २६ ॥
आस्तिकं दानशीलञ्च सर्वभूतहिते रतम् ।
विश्वासविनयोपेतं धनदेहाद्यवञ्चकम् ॥ २७ ॥
असाध्यसाधकं शूरमुत्साहबलसंयुतम् ।
अनुकूल[1]क्रियायुक्तमप्रमत्तं विचक्षणम् ॥ २८ ॥
हितसत्यमितस्मेरभाषणं मुक्तदूषणम् ।
सकृदुक्तगृहीतार्थं चतुरं बुद्धिविस्तरम् ॥ २९ ॥
स्वस्तुतौ परनिन्दायां विमुखं सुमुखं प्रिये ।
जितेन्द्रियं सुसन्तुष्टं धीमन्तं ब्रह्म[2]चारिणम् ॥ 30 ॥
त्यक्ताधिव्याधिचापल्यदुःखभ्रन्तिमसंशयम्[3] ।
गुरुध्यानस्तुतिकथादेवार्चावन्दनोत्[4]सुकम् ॥ 31 ॥
गुरुदैवतसम्भक्तं कामिनीपूजकं परम् ।
नित्यं गुरुसमीपस्थं गुरुसन्तोषकारकम् ॥ 32 ॥
मनोवाक्तनुभिर्नित्यं[5] परिचर्या[6]समुद्यतम् ।
गुर्वाज्ञापालकं देवि गुरुकीर्त्तिप्रकाशकम् ॥ 33 ॥
गुरुवाक्यप्रमाणज्ञं गुरुशुश्रूषणे रतम् ।
चित्तानुवर्त्तिनं प्रेष्य[7]कारिणं कुलनायिके ॥ 34 ॥
जातिमानधने गर्व[8]वर्जितं गुरुसन्निधौ ।
निरपेक्षं गुरुद्रव्ये तत्प्रसादाभिकाङ्क्षिणम् ॥ 35 ॥
कुलधर्मकथा[9]योगियोगिनीकौलिकप्रियम् ।
कुलार्चनादिनिरतं कुलद्रव्याजुगुप्सकम्[10] ॥ 36 ॥

---

1. क, अमलञ्च । 2. क, ग, घ, बुद्धि ।
3. ख, चापल्यं दुःशङ्कातङ्कसंशयं । 4. क, नन्दनोत्सुकं ।
5. क, सार्द्धं । 6. ख. गुरुकार्य । 7. ख, प्रेक्ष्य ।
8. ख, लज्जाभिमानगर्वादि । 9. ङ, महा ।
10. ङ, कुलद्रव्याजुगुप्सनं ।

जपध्यानादिनिरतं मोक्षमार्गाभिकाङ्क्षिणम्[1] ।
कुलशास्त्रप्रियं देवि पशु[2]शास्त्रपराङ्मुखम् ।
इत्यादिलक्षणोपेतं गुरुः शिष्यं परिग्रहेत् ॥ ३७ ॥
श्रीगुरुः परमेशानि शुद्धवेशो मनोहरः ।
सर्वलक्षणसम्पन्नः सर्वावयवशोभितः ॥ ३८ ॥
सर्वागमार्थतत्त्वज्ञः सर्वमन्त्र[3] विधानवित् ।
लोकसम्मोहनकरो[4] देववत् प्रियदर्शनः ॥ ३९ ॥
सुमुखः सुलभः स्वच्छो भ्रमसंशयनाशकः[5] ।
इङ्गिताकारवित् प्राज्ञ ऊहापोहविदुज्ज्वलः [6] ॥ ४० ॥
अन्तर्लक्ष्यो[7] बहिर्दृष्टिः सर्वज्ञो देशकालवित् ।
आज्ञासिद्धिस्त्रिकालज्ञो निग्रहानुग्रहक्षमः ॥ ४१ ॥
वेधको बोधकः[8] शान्तः सर्वजीवदयापरः[9] ।
स्वाधीनेन्द्रियसञ्चारषड्वर्गविजयक्षमः[10] ॥ ४२ ॥
अग्रगण्योऽतिगम्भीरः पात्रापात्रविशेषवित् ।
शिवविष्णुसमः साधुर्मन्ददर्शनदूषकः[11] ॥ ४३ ॥
निर्मलो[12] नित्यसन्तुष्टः स्वतन्त्रो मन्त्रशक्तिमान्[13] ।
सद्भक्तवत्सलो धीरः कृपालुः स्मितपूर्ववाक्[14] ॥ ४४ ॥

---

1. ङ, सौख्यमाज्ञादिकाङ्क्षिणं ।
2. ङ, पृथक् । 3. घ, ङ, सर्वतन्त्र ।
4. ख, ङ, लोकसम्मोहनाकारो ।
5. ख, स्वच्छः संशयच्छिदसंशयः । 6. ङ, विचक्षणः ।
7. ख, अन्तर्मुखो । 8. ख, वेधको बाधकः; ग, घ, वेदको बोधकः । 9. ङ, दयाकरः । 10. क, ग, घ, विजयः प्रियः; ङ, विजयप्रदः । 11. ख, शिवविज्ञपशुः साधुः पशुदर्शनदूषकः; ङ, साधुमनुभूषणभूषितः । 12. ख, ङ, निर्ममो ।
13. ख, नित्यमालोक्य स एव देवता प्रिये; ङ, स्वतन्त्रोऽनन्तशक्तिमान् । 14. ख, ग्रहकारकः ।

भक्तप्रियः सदोदारो गम्भीरः शिष्टसाधकः[1] ।
स्वेष्टदेवगुरुज्येष्ठ[2]वनितापूजनोत्सुकः ॥ ४५ ॥
नित्ये नैमित्तिके काम्ये रतः कर्मण्यनिन्दिते[3] ।
रागद्वेष[4]भयक्लेशदम्भाहङ्कारवर्जितः ॥ ४६ ॥
स्वविद्यानुष्ठानरतो धर्मादीनामुपार्जकः[5] ।
यदृच्छालाभसन्तुष्टो गुणदोषविभेदकः ॥ ४७ ॥
स्त्रीधनादिष्वनासक्तो दुःसङ्गव्यसनादिषु[6] ।
सर्वाहम्भावसंयुक्तो[7] निर्द्वन्द्वो नियतव्रतः ॥ ४८ ॥
अलोलुपो ह्यसङ्कल्प[8]पक्षपाती विचक्षणः ।
वित्तविद्यादिभिर्मन्त्रयन्त्रतन्त्राद्यविक्रयी ॥ ४९ ॥
निःसङ्गो निर्विकल्पश्च निर्णीतार्थोऽति[9]धार्मिकः ।
तुल्यनिन्दास्तुतिर्मौनी निरपेक्षो निरामयः[10] ।
इत्यादिलक्षणोपेतः श्रीगुरुः कथितः प्रिये ॥ ५० ॥
यः शिवः सर्वगः सूक्ष्मश्चोन्मना निष्कलोऽव्ययः ।
व्योमाकारो ह्यजोऽनन्तः स कथं पूज्यते प्रिये ॥ ५१ ॥
अत एव शिवः[11] साक्षाद्गुरुरूपं समाश्रितः ।
भक्त्या सम्पूजितो[12] देवि भुक्तिं मुक्तिं प्रयच्छति ॥ ५२ ॥

---

1. ख, भक्तिप्रियः सर्वशास्त्रज्ञ शुभशिष्ट इति क्रमं;
ङ, भक्तप्रियः समो देवि गम्भीरः शिष्टसाधकः ।
2. ख, गुरुः प्राज्ञो ; ङ, ज्येष्ठो देवगुरुश्रेष्ठो ।
3. ख, कर्मणि निन्दिते ।
4. क, वागदूषक ; ङ, वाग्विद्वेष ।
5. ख, स्वविद्यानुष्ठानतपोधर्मणाञ्च प्रकाशकः;
ङ, धर्मज्ञानार्थदर्शकः ।
6. ख, व्यसनोज्झितः ; ङ, दुःसङ्गो व्यसनादिषु ।
7. ङ, सन्तुष्टो ।
8. ख, अलोलुपोऽहिंसकश्च ; ङ, ह्यसङ्गश्च ।
9. ख, ङ, निर्णीतात्माति ।
10. ख, ङ, नियामकः ।
11. ङ, गुरुः ।
12. ख, ङ, सम्पूजयेद्देवि ।

शिवोऽहं नाकृतिर्देवि नरदृग्गोचरो नहि[1] ।
तस्मात् श्रीगुरुरूपेण शिष्यान् रक्षति धार्मिकान्[2] ॥ ५३ ॥
मनुष्यचर्मणा बद्धः[3] साक्षात् परशिवः स्वयम् ।
सच्छिष्या[4]नुग्रहार्थाय गूढं पर्यटति क्षितौ ॥ ५४ ॥
सद्भक्तरक्षणायैव निराकारोऽपि साकृतिः[5] ।
शिवः कृपानिधिर्लोके संसारीव हि चेष्टते[6] ॥ ५५ ॥
ललाटलोचनं चान्द्रीं कलामपि च दोर्द्वयम् ।
अन्तर्धाय च वर्त्तेयं[7] गुरुरूपो महीतले ॥ ५६ ॥
अत्रिनेत्रः शिवः साक्षादचतुर्बाहुरच्युतः ।
अचतुर्वदनो ब्रह्मा श्रीगुरुः कथितः प्रिये ॥ ५७ ॥
नरवद्दृश्यते लोके श्रीगुरुः पापकर्मणा ।
शिववद् दृश्यते लोके भवानि पुण्यकर्मणा[8] ॥ ५८ ॥
श्रीगुरुं परमं तत्त्वं तिष्ठन्तं चक्षुरग्रतः ।
मन्दभाग्या न पश्यन्ति ह्यन्धाः[9] सूर्यमिवोदितम् ॥ ५९ ॥
गुरुः सदाशिवः साक्षात् सत्यमेव न संशयः ।
शिव एव[10] गुरुर्नो चेद्भुक्तिं मुक्तिं ददाति कः ॥ ६० ॥
सदाशिवस्य देवस्य श्रीगुरोरपि पार्वति ।
उभयोरन्तरं नास्ति यः करोति स पातकी ॥ ६१ ॥

---

1. ख, शिवा दिव्याकृतिर्देवि नरदृग्गोचरा नहि ;
ङ, शिवोऽहमाकृति ।
2. ङ, सर्वदा ।
3. ङ, नद्धः ।
4. घ, ङ, स्वशिष्या ।
5. ङ, निरहङ्कारमाकृति ।
6. ङ, चेष्टितः ।
7. ख, अन्तर्निधाय वर्त्तेत । ङ, अन्तर्ध्याने च वर्त्तोऽयं ।
8. ख, साक्षात् नराणां पुण्यकर्मणा ;
क, ग, घ, नराणां पुण्यकर्मिणां ।
9. क, ज्योत्स्नाः ; ङ, शुल्काः । 10. ङ, शिवरूपी ।

देशिकाकृतिमास्थाय पशोः पाशानशेषतः[1] ।
छित्त्वा परं पदं देवि नयत्येनमतो गुरुः[2] ॥ ६२ ॥
सर्वानुग्रहकर्त्तृत्वादीश्वरः करुणानिधिः ।
आचार्यरूपमास्थाय दीक्षया मोक्षयेत् पशून् ॥ ६३ ॥
यथा घटश्च कलसः कुम्भश्चैकार्थवाचकः ।
तथा देवश्च मन्त्रश्च गुरुश्चैकार्थ उच्यते ॥ ६४ ॥
यथा देवस्तथा मन्त्रो यथा मन्त्रस्तथा गुरुः ।
देवमन्त्रगुरूणाञ्च पूजया[3] सदृशं फलम् ॥ ६५ ॥
शिवरूपं समास्थाय पूजां गृह्णामि[4] पार्वति ।
गुरुरूपं समादाय भवपाशान्निकृन्तये[5] ॥ ६६ ॥
सिद्धान्तसारवेत्ताहं बीजोऽहमिति बोधकृत् ।
अविच्छिन्नः सदा हृष्ट[6]हृदयो गुरुरुच्यते ॥ ६७ ॥
यो विलङ्घ्याश्रमान् वर्णानात्मन्येव स्थितः सदा[7] ।
ज्योति[8]र्वर्णाश्रमी योगी स गुरुः कथितः प्रिये ॥ ६८ ॥
नवाधारं षडध्वानं[9] षोडशाधारनिर्णयम् ।
यो जानाति विधानेन स गुरुः कथितः प्रिये ॥ ६९ ॥
दृश्यं विना स्थिरा दृष्टिर्मनश्चालम्बनं विना ।
विनायासं स्थिरो वायुर्यस्य स्यात् स गुरुः प्रिये ॥ ७० ॥
यत्तु संवित्तिजननं[10] परानन्दसमुद्भवम् ।
तत्तत्त्वं विदितं येन स गुरुः कुलनायिके ॥ ७१ ॥

---

1. ख, पाशानुदोषतः; ङ, पशुपाशानशेषतः ।
2. ख, नयत्येनमिति श्रुतिः; ङ, नयत्येवमतो गुरुः ।
3. ङ, पूजायाः
4. ख, ङ, गृह्णाति ।
5. ख, न्निकृन्तति; ड, न्निकृन्तयेत् ।
6. ङ, अविच्छिन्नसमाहृष्ट ।
7. ख, स्थिरा मतिः ।
8. ख, सोति ।
9. ड, षडध्वानं षडाधारं ।
10. क, बहुसम्पत्तिजननं; ङ, सत्त्वसंवित्तिजननं ।

भूतभव्यौ तन्त्रमन्त्रौ वेत्ति यः शाक्तशाम्भवम् ।
वेधञ्च षड्विधं देवि स हि वेधकरो गुरुः[1] ॥ ७२ ॥
पदमन्त्रकलायन्त्रसतत्त्वतद्गुणाह्वयम्[2] ।
शोधयेद् यः षडध्वानं स गुरुः कथितः प्रिये ॥ ७३ ॥
वेधं पदं विरोधञ्च[3] ग्रहणं मोक्षणं तथा ।
यो वा सम्यग्विजानाति स गुरुः कथितः प्रिये ॥ ७४ ॥
जाग्रत् स्वप्नः सुषुप्तिश्च तुरीयं तदतीतकम्* ।
यो वेत्ति पञ्चकं देवि स गुरुः कथितः प्रिये ॥ ७५ ॥
पिण्डं पदं तथा रूपं रूपातीतं चतुष्टयम् ।
यो वा सम्यग्विजानाति स गुरुः कथितः प्रिये ॥ ७६ ॥
यो वा पराञ्च पश्यन्तीं मध्यमां वैखरीमपि ।
चतुष्टयं विजानाति स गुरुः कथितः प्रिये ॥ ७७ ॥
आत्मविद्याशिवसर्वमिति तत्त्व[4]चतुष्टयम् ।
यो वेत्ति परमेशानि स गुरुर्नापरः प्रिये ॥ ७८ ॥
पाशच्छेदं[5] वेधदीक्षां पशुग्रहण[6]मेव च ।
त्रिविधं यो विजानाति स गुरुः परमो मतः ॥ ७९ ॥
पदं पाशं[7] पशूनाञ्च रहस्यार्थं[8] विधानतः ।
यो जानाति वरारोहे स गुरुः कथितः प्रिये ॥ ८० ॥

---

* ङ पुस्तके अस्मादारभ्य श्लोकत्रयं नास्ति ।

1. ख, भूतो भावो भद्ररौद्रौ शक्ते शाम्भवमेव यः ।
वेदस्य षड्विधं देवि स हि वेधकरो गुरुः ॥
ङ, भूतभव्यौ मन्त्रतन्त्रौ शक्तिशाम्भववित्तमः ।
वेधञ्च षड्विधं देवि स हि वेत्ति परो गुरुः ॥

2. क, ख, परवर्णकलामन्त्रसत्तत्त्वभुवनाश्रयम् ; ग, पदवर्णकलामन्त्रमण्डले भुवनाह्वयं ।

3. ख, घटं निरीधश्च ; ङ, निरोधञ्च । 4. ङ, विद्या ।

5. ग, पशुस्तम्भं ; घ, पशुस्तोभं ।

6. ग, पशुत्थहन ; ङ, पशुग्रहर ।

7. ङ, पदपाशं । 8. ङ, रहस्यात्म ।

चक्रसङ्केतकं मन्त्रं[1] पूजासङ्केतकं तथा ।
त्रितयं यो विजानाति स गुरुः कथितः प्रिये ॥ ८१ ॥
वाणेतरस्वयम्भ्वाख्यलिङ्गत्रितयसंस्थितिम् ।
तत्त्वतो यो विजानाति स गुरुः कथितः प्रिये ॥ ८२ ॥
आणवं कार्मणञ्चैव[2] मायीयञ्च[3] मलत्रयम् ।
यो विशोधयितुं शक्तः स गुरुः परमो मतः ॥ ८३ ॥
आरक्तशुक्लमिश्रा [कृष्णा] ख्यचरणत्रयवासनाम् ।
यो जानाति महादेवि स गुरुः परमो मतः ॥ ८४ ॥
महामुद्रां नभोमुद्राम् उड्डीयानं जलन्धरम् ।
मूलबन्धञ्च[4] यो वेत्ति स गुरुः परमो मतः ॥ ८५ ॥
शिवादिक्षितिपर्यन्तं षट्त्रिंशत्तत्त्वनिर्णयम् ।
यो विजानाति तत्त्वेन स गुरुः परमो मतः ॥ ८६ ॥
अन्तर्यागं बहिर्यागं कलाज्ञानस्थितिं[5] प्रिये ।
बाधामन्त्रविधानञ्च यो वेत्ति स गुरुः प्रिये[6] ॥ ८७ ॥
पिण्डब्रह्माण्डयोरैक्यं स्थितिं[7] यो वेत्ति तत्त्वतः ।
शिरास्थिरोमसंख्यादि स गुरुर्नापरः प्रिये[8] ॥ ८८ ॥
पद्मादिचतुरशीतिनानासनविचक्षणः ।
यमाद्यष्टाङ्गयोगज्ञः स गुरुः परमो मतः ॥ ८९ ॥
घृणा शङ्का भयं लज्जा जुगुप्सा चेति पञ्चमी[9] ।
कुलं शीलं तथा जातिरष्टौ पाशाः प्रकीर्त्तिताः ॥ ९० ॥

---

1. क, यन्त्रं ।
2. क, आत्मजं कर्मजञ्चैव ; ङ, आनव्यं कार्मणञ्चैव ।
3. ङ, मायिकञ्च । 4. क, मूलरन्ध्रञ्च ।
5. क, ङ, कालज्ञानं स्थितं । 6. ख, चारुयन्त्रविधानञ्च यो वेत्ति स गुरुः प्रिये ; ङ, त्रिविधानञ्च यो वेत्ति स गुरुः परमो मतः ।
7. ङ, स्थितं । 8. ङ, स गुरुः परमो मतः ।
9. ङ, तृष्णा लज्जा भयं शोको जुगुप्सा चेति पञ्चमं ।

पाशबद्धः पशुर्ज्ञेयः पाशमुक्तो महेश्वरः ।
तस्मात् पाशहरो यस्तु[1] स गुरुः परमो मतः ॥ ९१ ॥
बन्धनं योनिमुद्राया मन्त्रचैतन्यदर्शनम्[2] ।
यन्त्रमन्त्र[3]स्वरूपञ्च यो वेत्ति स गुरुः प्रिये ॥ ९२ ॥
विनिक्षिप्तां गतायातां संक्लिष्टां संविनीतकाम्[4] ।
चतुर्विधां मनोऽवस्थां यो वेत्ति स गुरुः प्रिये ॥ ९३ ॥
मूलादिब्रह्मरन्ध्रान्तसप्ताम्भोजदलेषु यः[5] ।
जीवाचारफलं वेत्ति स गुरुर्नापरः प्रिये ॥ ९४ ॥
शिवादिगुरुपर्यन्तं पारम्पर्यक्रमेण यः ।
अवाप्त[6]तत्त्वसम्भारः स गुरुर्नापरः प्रिये[7] ॥ ९५ ॥
येन वा दर्शिते तत्त्वे तत्क्षणात्तन्मयो भवेत् ।
मन्यते मुक्तमात्मानं स गुरुर्नापरः प्रिये[8] ॥ ९६ ॥
ये दत्वा सहजानन्दं हरन्तीन्द्रियजं सुखम्[9] ।
सेव्यास्ते गुरवः शिष्यैरन्ये त्याज्याः प्रतारकाः ॥ ९७ ॥
संसारभयभीतस्य शिष्यस्य[10] गुरुरादरात् ।
व्रतोपवासनियमैर्नियन्ता स गुरुर्मतः ॥ ९८ ॥
यः प्रसन्नः क्षणार्द्धेन मोक्षलक्ष्मीं[11] प्रयच्छति ।
दुर्लभं तं विजानीयाद् गुरुं संसारतारकम्[12] ॥ ९९ ॥

---

1. ख, यत्र । 2. ङ, मन्त्रं चैतन्यसंज्ञकं । 3. ख, मन्त्राद्यन्त ।

4. क, विनिक्षिप्तं गतायातं संश्लिष्टञ्च विनीतकं; ख, विनिःक्षिप्तगतायातं स्थितञ्च सुविनीतकं ।

5. ख, मूलादिब्रह्मरन्ध्रान्तं सप्ताम्भोधिजलेषु यः; ङ, मूलादिब्रह्मरन्ध्रान्तं सप्ताम्भोजं कुलेषु यः । 6. ख, अप्राप्त ।

7. ङ, स गुरुः परमो मतः ।

8. ङ, धन्यं तदुक्तमखिलं स गुरुः परमो मतः ।

9. क, वहन्तीन्द्रियजं सुखं; ङ, यो वेत्ता सच्चिदानन्दं हरेदिन्द्रियजं सुखं । 10. ङ, भयहा । 11. ङ, मोक्षरत्नं ।

12. ङ, भवसागरतारकं ।

यः क्षणेनात्मसामर्थ्यं स्वशिष्याय ददाति हि ।
क्रियायासादिरहितं[1] स गुरुर्द्देवदुर्लभः ॥ १०० ॥
यः सद्यः प्रत्ययकरं सुलभञ्चात्मसौख्यदम्* ।
ज्ञानोपदेशं कुरुते स गुरुर्द्देवदुर्लभः ॥ १०१ ॥
द्वीपाद् द्वीपान्तरं देवि सञ्चरेत्तद्यथा तथा ।
यो दद्यात् स गुरुर्ज्ञानमभ्यासादिविवर्जितम् ॥ १०२ ॥
क्षुधितस्य यथा तृप्तिराहारादाशु जायते[2] ।
तथोपदेशमात्रेण ज्ञानदो दुर्लभो गुरुः ॥ १०३ ॥
गुरवो बहवः सन्ति दीपवच्च गृहे गृहे ।
दुर्लभोऽयं गुरुर्द्देवि सूर्यवत् सर्वदीपकः[3] ॥ १०४ ॥
गुरवो बहवः सन्ति वेदशास्त्रदिपारगाः† ।
दुर्लभोऽयं गुरुर्द्देवि परतत्त्वार्थपारगः ॥ १०५ ॥
गुरवो बहवः सन्ति आत्मनोऽन्यप्रदा भुवि[4] ।
दुर्लभोऽयं गुरुर्द्देवि लोकेष्वात्मप्रकाशकः[5] ॥ १०६ ॥
गुरवो बहवः सन्ति कु[6]मन्त्रौषधिवेदिनः ।
निगमागमशास्त्रोक्तमन्त्रज्ञो दुर्लभो भुवि ॥ १०७ ॥
गुरवो बहवः सन्ति शिष्यवित्तापहारकाः‡ ।
दुर्लभोऽयं गुरुर्द्देवि शिष्यदुःखापहारकः ॥ १०८ ॥
वर्णाश्रमकुलाचारनिरता बहवो[7]भुवि ।
सर्वसङ्कल्पहीनो यः स गुरुर्द्देवि दुर्लभः ॥ १०९ ॥

---

* ख पुस्तके श्लोकोऽयं न दृश्यते ।
† क पुस्तके इत आरभ्य श्लोकत्रय नास्ति ।
‡ क, ख पुस्तकयोः श्लोकोऽयं न दृश्यते ।
1. ङ, प्रियायासादिरहितः ।
2. ङ, तुष्टिराहाराद् दृश्यते यथा ।
3. क, शिष्यदुःखापहारकः; ख, परतत्त्वार्थपारगः ।
4. ङ, योगेनान्यत्पदा भुवि । 5. ङ, लोके स्वात्मप्रकाशकः ।
6. ङ, स । 7. ङ, गुरवो ।

गुरोर्यस्यैव सम्पर्कात्[1] परानन्दोऽभिजायते।
गुरुं तमेव वृणुयान्नापरं मतिमान्नरः ॥ ११० ॥
यस्यानुभवपर्यन्तं[2] बुद्धिस्तत्र[3] प्रवर्त्तते ।
तस्यालोकनमात्रेण मुच्यते नात्र संशयः ॥ १११ ॥
शङ्कया भक्षितं सर्वं त्रैलोक्यं सचराचरम् ।
सा शङ्का भक्षिता येन स गुरुर्देवि[4]दुर्लभः ॥ ११२ ॥
यथा वह्निसमीपस्थं नवनीतं विलीयते ।
तथा पापं विलीयेत सदाचार्य[5]समीपतः ॥ ११३ ॥
यथा दीप्तानलः काष्ठं शुष्कमार्द्रञ्च[6] निर्दहेत् ।
तथा गुरुकटाक्षस्तु शिष्यपापं दहेत् क्षणात् ॥ ११४ ॥
यथा महानिलोद्धूतं तूलं दशदिशो व्रजेत् ।
तथैव गुरुकारुण्यात् पापराशिः पलायते[7] ॥ ११५ ॥
दीपदर्शनमात्रेण प्रणश्यति तमो यथा ।
सद्गुरोर्दर्शनाद्देवि तथाऽज्ञानं विनश्यति[8] ॥ ११६ ॥
सर्वलक्षणसम्पन्नो वेदशास्त्रविधानवित् ।
सर्वोपायविधानज्ञस्तत्त्वज्ञानी गुरुः स हि[9] ॥ ११७ ॥
पूजाहोमाश्रमाचारतपस्तीर्थव्रतादिकम् ।
मन्त्रागमादिविज्ञानं तत्त्वहीनस्य निष्फलम् ॥ ११८ ॥
स्वयं वेद्ये[10] परे तत्त्वे स्वात्मानं वेत्ति निश्चलः[11] ।
आत्मनोऽनुग्रहो[12] नास्ति परस्यानुग्रहः कथम् ॥ ११९ ॥

1. क सङ्कल्पात्; ङ, संस्पर्शात् ।
2. ङ, यस्यात्मभवपर्यन्तं । 3. ङ, बुद्धिस्तस्य ।
4. ङ, देव । 5. ख, सदाचार ।
6. ग, घ, ङ, शुष्कमात्रञ्च । 7. क, ङ, प्रलीयते ।
8. क, प्रलीयते; ग, घ, पलायते; ङ, विलीयते ।
9. ख, स्तत्त्वहीनो गुरुर्नहि; ङ, सर्वोपायविधातैव तत्त्वज्ञानी गुरुः स हि । 10. ख, स्वसंवेद्ये; ग, घ, असंवेद्य; ङ, सुसंवेद्यं ।
11. ख, स्वात्मनश्च न निश्चयं । 12. ख, निग्रहो ।

षट्प्रकारं[1] मनोरूपं प्रत्यक्षं स्वतनु[2]स्थितम् ।
यो न जानाति चान्यस्य कथं[3] मोक्षं ददात्यसौ ॥ १२० ॥
सर्वलक्षणहीनोऽपि तत्त्वज्ञानी गुरुः स्मृतः ।
तस्मात्तत्त्वविदेवेह मुक्तो मोचक एव च ॥ १२१ ॥
यस्तत्त्वविन्महेशानि स पशुं[4] बोधयत्यपि ।
तत्त्वहीनात् कुतोऽध्यात्मतत्त्वज्ञानपरिग्रहः[5] ॥ १२२ ॥
तत्त्वज्ञैरुपदिष्टा ये तत्त्वज्ञास्ते न संशयः ।
पशुभिश्चोपदिष्टा ये देवि ते पशवः स्मृताः ॥ १२३ ॥
विद्धस्तु वेधयेद्देवि नाविद्धो वेधको भवेत् ।
मुक्तस्तु मोचयेद्बद्धं[6] न मुक्तो मोचकः कथम् ॥ १२४ ॥
अभिज्ञश्चोद्धरेन्मूर्खं न मूर्खो मूर्खमुद्धरेत् ।
शिलां सन्तारयेन्नौर्हि किं[7] शिला तारयेच्छिलाम् ॥ १२५ ॥
तत्त्वहीनं[8] गुरुं लब्ध्वा केवलं भव तत्नरः ।
इहामुत्र फलं किञ्चित् स नरो[9] नाप्नुयात् प्रिये ॥ १२६ ॥
शैवे गुरुत्रयं प्रोक्तं वैष्णवे गुरुपञ्चकम् ।
वेदशास्त्रेषु शतशो गुरुरेकः कुलान्वये[10] ॥ १२७ ॥
प्रेरकः सूचकश्चैव वाचको दर्शकस्तथा ।
शिक्षको बोधकश्चैव षडेते गुरवः स्मृताः ॥ १२८ ॥
पञ्चैते कार्यभूताः स्युः कारणं बोधको भवेत्[11] ।
पूर्णाभिषेककर्त्ता यो गुरुस्तस्यैव पादुका ।
पूजनीया महेशानि बहुत्वेऽपि न संशयः ॥ १२९ ॥
श्रीगुरुं लक्षणोपेतं[12] संशयच्छेदकारकम् ।
लब्ध्वा ज्ञानप्रदं देवि न गुर्वन्तरमाश्रयेत् ॥ १३० ॥

---

1. ख, ब्रह्माकारं । 2. ख, स्वामिनि । 3. क, कस्य ।
4. ङ, साधूंश्च । 5. ङ, बोधः कुतोऽध्यात्मपरिग्रहः ।
6. ङ, मोचयेदूद्ध्वं । 7. ङ, न । 8. ख, तद्विहीनं ।
9. ङ, नापगे । 10. ख, कुलागमे; ङ, कुलप्रियः ।
11. ख, वांधकाः कारणं भवेत् । 12. ङ, श्रीगुरोर्लक्षणोपेतं ।

अनभिज्ञं गुरुं प्राप्य सदा संशयकारकम्[1] ।
गुर्वन्तरन्तु गत्वा स नैतद्दोषेण लिप्यते ॥ १३१ ॥
मधुलुब्धो यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत् ।
ज्ञानलुब्धस्तथा शिष्यः गुरोर्गुर्वन्तरं व्रजेत् ॥ १३२ ॥
इति ते कथितं किञ्चिल्लक्षणं गुरुशिष्ययोः ।
समासेन कुलेशानि किम्भूयः श्रोतुमिच्छसि ॥ १३३ ॥

इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चम-खण्डे ऊर्ध्वाम्नायतन्त्रे गुरुशिष्यलक्षणं नाम त्रयोदश उल्लासः ॥ १३ ॥

1. ङ, संशयच्छेदकारकं ।

# चतुर्दश उल्लासः।



श्रीदेव्युवाच।

कुलेश श्रोतुमिच्छामि परीक्षां गुरुशिष्ययोः।
उपदेशक्रमं दीक्षाभेदांश्च वद मे प्रभो ॥ १ ॥

ईश्वर उवाच।

शृणु देवि प्रवक्ष्यामि यन्मां त्व परिपृच्छसि।
तस्य श्रवणमात्रेण चित्तशुद्धिः प्रजायते ॥ २ ॥
विना दीक्षां न मोक्षः स्यात्तदुक्तं[1] शिवशासने।
सा च न स्याद्विनाचार्यमित्याचार्यपरम्परा[2] ॥ ३ ॥
तस्मात् सिद्धान्तं सम्प्राप्य सम्प्रदायादिहेतुभिः[3]।
अन्तरेणोपदेष्टारं मन्त्राः स्युर्निष्फला यतः[4] ॥ ४ ॥
देवास्तमेव शंसन्ति पारम्पर्यप्रवर्त्तकं[5]।
गुरुं मन्त्रागमाभिज्ञं[6] समयाचारपालकम् ॥ ५ ॥
गुरुः[7] शिष्याधिकारार्थं विरक्तोऽपि शिवाज्ञया।
किञ्चित्कालं विधायेत्थं स्वशिष्याय समर्पयेत् ॥ ६ ॥

---

1. ख, विना दीक्षां न मोक्षः स्याद्विप्राणां, ङ, विना दीक्षां फलं न स्याद् यमिनां।

2. ङ, पुरस्सरं।

3. ख, ज्ञेयः सिद्धान्तशास्त्रार्थसम्प्रदायादिहेतुकः; ग, घ, सिद्धान्तमाश्राव्य; ङ, ज्ञेया सिद्धार्थशास्त्रार्थसम्प्रदायर्द्धिहेतुभिः।

4. ख, अन्तरेणोपदेष्टा ये मन्त्रा ये निष्फला यतः।

5. ख, पारम्पर्यप्रवर्त्तते, ङ, पारम्पर्यपुरःसरम्।

6. ङ, मन्त्रागमाविद्ध। 7. ख, ङ, गुरु।

तस्यार्पिताधिकारस्य[1] योगः साक्षात् परे शिवे ।
देहान्ते[2] शाश्वती मुक्तिरिति शङ्करभाषितम् ॥ ७ ॥
तस्मात् सर्वप्रयत्नेन साक्षात्परशिवोदितम् ।
सम्प्रदायमविच्छिन्नं[3] सदा कुर्यात् गुरुः प्रिये ॥ ८ ॥
शक्तिसिद्धिसुसिद्ध्यर्थं[4] परीक्ष्य विधिवद् गुरुः ।
पश्चादुपदिशेन्मन्त्रमन्यथा निष्फलं भवेत् ॥ ९ ॥
अन्यायेन तु यो दद्याद् गृह्णात्यन्यायतश्च यः ।
ददतो गृह्णतो देवि कुलशापो भविष्यति ॥ १० ॥
गुरुशिष्यावुभौ मोहादपरीक्ष्य परस्परम् ।
उपदेशं ददद् गृह्णन् प्राप्नुयातां पिशाचताम् ॥ ११ ॥
अशास्त्रीयोपदेशञ्च यो गृह्णाति ददाति हि ।
भुञ्जाते तावुभौ घोरान्नरकानेकविंशतिम् ॥ १२ ॥
असंस्कृतोपदेशञ्च यः करोति स पातकी* ।
विनश्यति च तन्मन्त्रं सैकते शालिबीजवत्[5] ॥ १३ ॥
अनर्हे मन्त्रविज्ञानं न तिष्ठति कदाचन ।
तस्मात् परीक्ष्य कर्त्तव्यमन्यथा निष्फलं भवेत् ॥ १४ ॥
कृत्वा समयदीक्षाञ्च दत्त्वा समयपादुकाम् ।
सन्निधायात्मनः[6] शिष्यं वदेन्मन्त्रं न चान्यथा ॥ १५ ॥
सच्छिष्यायातिभक्ताय यज्ज्ञानमुपदिश्यते ।
तज्ज्ञानं तत्तु [7]शास्त्रार्थं तद्विदध्यादखण्डितम् ॥ १६ ॥
असच्छिष्येष्वभक्तेषु यज्ज्ञानमुपदिश्यते ।
तत् प्रयात्यपवित्रत्वं गोक्षीरं श्वघृतादिव ॥ १७ ॥

---

* ङ पुस्तके श्लोकार्द्धमिदं न दृश्यते ।

1. ग, घ, तस्याप्यनधिकारस्य ; ङ, तस्यापि नाधिकारस्य ।

2. ख, तदन्ते । 3. ङ, सम्प्रदायपरिच्छिन्नं ।

4. ख, भक्तिमुक्तिप्रसिद्ध्यर्थं ; ङ, शक्तिसिद्धिमसिद्धार्थं ।

5. ङ, परीक्ष्य वक्ष्यते तन्त्रं सैकतं शालिबीजवत् ।

6. ङ, संविधायात्मनः । 7. ङ, बहु ।

धनेच्छाभयलोभाद्यैरयोग्यं यदि दीक्षयेत् ।
देवताशापमाप्नोति कृतञ्च निष्फलं भवेत्* ॥ १८ ॥
ज्ञानेन क्रियया वापि गुरुः शिष्यं परीक्षयेत् ।
संवत्सरं तदर्द्धं वा तदर्द्धं वा प्रयत्नतः ॥ १९ ॥
उत्तमांश्चाधमे कुर्यान्नीचानुत्तमकर्मणि ।
प्राणद्रव्यप्रणामाद्यैरादेशैश्च स्वयं समैः[1] ॥ २० ॥
तत्कर्म[2]सूचकैर्वाक्यैर्मर्यायाभिः क्रूरचेष्टितैः ।
पक्षपातैरुदासीनैरनेकै[3]श्च मुहुर्मुहुः ॥ २१ ॥
आकृष्टस्ताडितो वापि यो विषादं न याति च ।
गुरुः कृपां करोतीति मुदा सञ्चिन्तयेत् सदा ॥ २२ ॥
श्रीगुरोः स्मरणे चापि कीर्त्तने दर्शनेऽपि च ।
वन्दने परिचर्यायामाह्वाने प्रेषणे प्रिये ॥ २३ ॥
आनन्दकम्परोमाञ्चस्वर[4]नेत्रादिविक्रियाः[5] ।
येषां स्युस्तेऽत्र योग्याश्च[6] दीक्षासंस्कारकर्मणि ॥ २४ ॥
शिष्योऽपि लक्षणैरेतैः कुर्याद् गुरुपरीक्षणम् ।
आनन्दाद्यैर्जपस्तोत्रध्यानहोमार्चनादिषु[7] ॥ २५ ॥
ज्ञानोपदेशसामर्थ्यं मन्त्रसिद्धिमपीश्वरि ।
वेधकत्वं[8] परिज्ञाय शिष्यो भूयान्न चान्यथा ॥ २६ ॥
आदिमध्यावसानेषु योग्याः शक्तिनिपातिताः[9] ।
अधमा मध्यमाः श्रेष्ठाः शिष्या देवि प्रकीर्त्तिताः ॥ २७ ॥

---

* ख पुस्तके देवतेत्यारभ्य परीक्षयेदित्यन्तश्लोको नास्ति ।

1. ख, समासमैः ; ङ, प्रप्यद्रव्यैः प्रदानाद्यैरादेशैश्च समासमैः ।

2. ख, तन्मूर्खं । 3. ङ, पक्षपातैरुपादानैरालस्यै ।

4. घ, स्वयं । 5. ख, आनन्दकम्परोमाञ्चं स्वनेत्रादिषु विक्रियाः ।

6. ख, येषां सन्त्यत्र योग्याः स्युः ।

7. ख, जपन् स्तोत्रं ध्यानदेवार्चनादिषु ; ङ, होमार्चनादिभिः ।

8. ङ, बोधकत्वं । 9. ङ, योग्या शक्तिनिपातिता ।

आदौ भक्तिर्भवेद्देवि दीक्षार्थं समुदन्ति ये ।
पुनर्विपुलहृष्टास्ते[1] आदियोग्या इतीरिताः ॥ २८ ॥
दीक्षासमयसम्प्राप्ता ज्ञानविज्ञानवर्जिताः[2] ।
भक्त्या प्रध्वस्तपर्याया[3] मध्ययोग्याश्च ते स्मृताः ॥ २९ ॥
आदौ भक्तिविहीना ये मध्यभक्तास्तु ये नराः ।
अन्तप्रवृद्धभक्ताश्च अन्तयोग्या [4]भवन्ति ते ।
उत्तमज्ञानसंज्ञाश्चेत्युपदेश[5]स्त्रिधा प्रिये ॥ ३० ॥
यथा पिपीलिका मन्दमन्दं वृक्षाग्रगं फलम् ।
चिरेणाप्नोति कर्मोपदेश[6]श्चापि तथा स्मृतः ॥ ३१ ॥
यथा कपिश्च शाखायां[7] शाखामुल्लङ्घ्य यत्नतः ।
फलं प्राप्नोति धर्मस्य[8] चोपदेशस्तथा प्रिये ॥ ३२ ॥
यथा वियद्गमः शीघ्रं फल एव निषीदति ।
तथा ज्ञानोपदेशश्च कथितः कुलनायिके ॥ ३३ ॥
स्पर्शाख्या देवि दृक्संज्ञा मानसाख्या महेश्वरि ।
क्रियायासादिरहिता देवी दीक्षा त्रिधा स्मृता ॥ ३४ ॥
यथा पक्षी स्वपक्षाभ्यां शिशून् संवर्द्धयेच्छनैः[9] ।
स्पर्शदीक्षोपदेशाच्च तादृशः कथितः प्रिये ॥ ३५ ॥
स्वापत्यानि यथा मत्स्यो वीक्षणेनैव पोषयेत् ।
दृग्भ्यां दीक्षोपदेशश्च तादृशः परमेश्वरि ॥ ३६ ॥

---

* क, ग, घ, ङ पुस्तकेषु श्लोकार्द्धमिदं न दृश्यते ।

1. ख, पुनर्विलुप्तहृष्टास्ते; ङ, पुनर्विह्वलहृष्टास्ते ।

2. ङ, ज्ञानाज्ञानविवर्जिताः ।

3. ख, प्रध्वस्तवीर्या ये; ङ, प्रध्वस्तसुधियो ।

4. ख, अन्ते प्रभूतभक्तिस्तु अन्तयोग्या; ङ, अन्ते भक्ताः प्रबुद्धाः स्युर्ह्यन्तयोग्या ।

5. ङ, उत्तमाज्ञानसंज्ञाश्चेदुपदेश । 6. ङ, धर्मोपदेश ।

7. ख, शाखायाः । 8. ख, भक्तस्य । 9. ङ, समुद्धरेच्छनैः ।

यथा कूर्मः स्वतनयान् ध्यानमात्रेण पोषयेत् ।
वेधदीक्षोपदेशश्च मानसः स्यात्[1] तथाविधः ॥ ३७ ॥
शक्तिपातानुसारेण[2] शिष्योऽनुग्रहमर्हति ।
यत्र शक्तिर्न पतति तत्र सिद्धिर्न जायते ॥ ३८ ॥
क्रियावर्णकलास्पर्शवाग्दृङ्मानससंज्ञया[3]* ।
दीक्षा मोक्षप्रदा देवि सप्तधा परिकीर्त्तिता ॥ ३९ ॥
समयाख्या विशेषा च साधिका पुत्रिकाह्वया ।
वेधका पूर्णसंज्ञा चाचार्या निर्वाणसंज्ञिका[4] ॥ ४० ॥
क्रियादीक्षाष्टधा प्रोक्ता कुण्डमण्डप[5]पूर्विका ।
कलसादिसमायुक्ता कर्त्तव्या गुरुणा बहिः ।
देवेशि देहशुद्ध्यर्थं[6] पूर्वोक्तविधिनाचरेत्[7] ॥ ४१ ॥
वर्णदीक्षा त्रिधा प्रोक्ता द्विचत्वारिंशदक्षरैः ।
पञ्चाशद्वर्णैर्वा देवि द्विषष्टिलिपिभिस्तु वा ॥ ४२ ॥
वर्णान् शिष्यतनौ न्यस्य प्रतिलोमेन संहरेत्[8] ।
परमात्मनि संयोज्य तच्चैतन्यं गुरुः प्रिये ॥ ४३ ॥
तस्मादुत्पाद्य तान् वर्णान् न्यसेच्छिष्यतनौ पुनः ।
सृष्टिक्रमेण विधिना चैतन्यञ्च प्रयोजयेत् ॥ ४४ ॥
जायते देवताभावः परानन्द[9]मयः शिशोः ।
एषा वर्णमयी प्रोक्ता दीक्षा पाशहरा[10] प्रिये ॥ ४५ ॥

---

* ख पुस्तके श्लोकार्द्धमिदं न दृश्यते ।

1. ङ, मानुषस्य । 2. ख, शक्तिमानानुसारेण; ङ, शक्तिमालानुसारेण । 3. ग, घ, ध्यानसमाह्वयाः; ङ, क्रियाज्ञानकलास्पर्शज्ञानध्यानसमाकुलाः । 4. क, ग, घ, ङ, वेधकाः पूर्णसंज्ञाः स्युश्चर्या निर्वाणसंज्ञकाः ।

5. ङ, कुलमण्डप । 6. ङ, देहसिद्ध्यर्थं । 7. क, त्रिविधाचरेत् ।

8. ङ, सञ्चरेत् । 9. ङ, परातीत ।

10. ख, दीक्षा प्रोक्ता पापौघहा; ङ, पापहरा ।

कलादीक्षा त्रिधा ज्ञेया[1] कर्त्तव्या विधिवत् प्रिये ।
निवृत्तिर्जानुपर्यन्तं[2] तलादारभ्य संस्थिता[3] ॥ ४६ ॥
जानुनोर्नाभिपर्यन्तं [4]प्रतिष्ठा तिष्ठति प्रिये ।
नाभेः कण्ठावधि व्याप्ता[5] विद्या शान्तिस्ततः परम् ॥ ४७॥
कण्ठाल्ललाटपर्यन्तं व्याप्ता तस्माच्छिरोऽवधि[6] ।
शान्त्यतीता कला चैषा[7] कलाव्याप्तिरितीरिता ॥ ४८ ॥
संहार[8]क्रमयोगेन स्थानात् स्थानान्तरं प्रिये ।
संयोज्य विधिवत्[9] सम्यग्विधिवेत्ता[10] शिरोऽवधि ॥ ४९ ॥
इयं प्रोक्ता कुलेशानि दिव्यभावप्रदायिनी ।
अष्टत्रिंशत्[11]कलाभिर्वा पञ्चाशद्भिरथापि वा ॥ ५० ॥
तत्त्वन्यासक्रमेणैव सृष्टिसंहारमार्गतः[12] ।
ज्ञात्वा गुरुमुखाद्देवि शिष्ये संयोज्य वेधयेत् ॥ ५१ ॥
जायते देवताभावो योगिनीवीरमेलनम्[13] ।
कलादीक्षा[14] समुद्दिष्टा पशुपाशापहारिणी ॥ ५२ ॥
हस्ते शिवं गुरुं[15] ध्यात्वा जपेन्मूलाङ्गमालिनीम् ।
गुरुः स्पृशेच्छिष्यतनुं[16] स्पर्शदीक्षा भवेदियम् ॥ ५३ ॥
चित्तं तत्त्वे समाधाय परतत्त्वोपबृंहितान्[17] ।
उच्चरेत् संहतान्मन्त्रान्[18] वाग्दीक्षेति निगद्यते ॥ ५४ ॥

---

1. ङ, च विज्ञेयः ।
2. ङ, निवृत्तिजानुपर्यन्तं । 3. ङ, संस्थितः ।
4. ङ, जान्नोश्च नाभिपर्यन्तं । 5. ङ, नाभौ कण्ठावधि प्रोक्ता ।
6. ख, च्छिरावधि । 7. ख, ज्ञेया ।
8. ख, संजात । 9. ङ, विषये ।
10. ख, विधिवत्ता: । 11. ङ, चित्तं तत्त्वोत् ।
12. ख, योगतः । 13. ख, वीरसम्पदः; ङ, वीरसङ्गमः ।
14. ख, कुलदीक्षा । 15. ख, हस्ते शिवपुरं ।
16. क, ग, घ, गुरुः स्पृशेत शिष्यस्य, ङ, गुरुः स्पृशेत् स्वशिष्यस्य ।
17. ग, घ, ङ, बृंहितात् । 18. क, संहृतान्मन्त्री ; ङ, संहतान्मन्त्री ।

निमील्य नयने ध्यात्वा परतत्त्व[1]प्रसन्नधीः ।
सम्यक् पश्येद्गुरुः शिष्यं दृग्दीक्षा च भवेत् प्रिये ॥ ५५ ॥
गुरोरालोकमात्रेण भाषणात् स्पर्शनादपि ।
सद्यः सञ्जायते ज्ञानं सा दीक्षा शाम्भवी मता ॥ ५६ ॥
मनोदीक्षा द्विधा[2] प्रोक्ता तीव्रा तीव्रतरापि च ।
अध्वानं[3] षड्विधं ज्ञात्वा शिष्यदेहे स्मरन् प्रिये ॥ ५७ ॥
कल्पयेद्भुवनं तत्त्वं कलां वर्णं पदं मनुम्[4] ।
आजानुनाभिहृत्कण्ठतालु[5]मूर्द्धान्त[6]मम्बिके ॥ ५८ ॥
गुरूपदिष्टमार्गेण वेधं कुर्याद्विचक्षणः ।
पाशयुक्तः[7] क्षणाच्छिष्यश्छिन्नपाशस्तदा[8] भवेत् ।
एषा मुक्तिप्रदा प्रोक्ता तीव्रदीक्षा कुलेश्वरि* ॥ ५९ ॥
देवि तीव्रतरा चापि गुरुणा स्मृतमात्रतः ।
सम्यक्संवेधिनः शिष्यश्छिन्नपापस्तदा भवेत् ॥ ६० ॥
बाह्यव्यापारनिर्मुक्तो भूमौ पतति तत्क्षणात् ।
सञ्जातदिव्यभावोऽसौ सर्वं जानाति[9] शाम्भवि ॥ ६१ ॥
यदस्ति वेधकाले तत्[10] स्वयमेवानुभूयते ।
प्रबुद्धः सन् न शक्नोति तत् सुखं वक्तुमीश्वरि[11] ॥ ६२ ॥
वेधविद्धः शिवः साक्षान्न पुनर्जन्मभाग् भवेत्[12] ।
एषा तीव्रतरा दीक्षा भवबन्धविमोचनी ।
शिवभावप्रदा साक्षात्[13] त्वां शपे कुलनायिके ॥ ६३ ॥

---

* क, ग, घ, ङ पुस्तकेषु अस्मादारभ्य "भवेत्" इत्यन्तसार्द्धश्लोको नास्ति । 1. ख, परतत्त्वं ; घ, ङ, परतत्त्वे ।
2. क, ग, घ, मया ; ङ, मनोर्दीक्षा द्विधा ।
3. ख, अध्वनां । 4. ख, कलां वर्णं पदं तनु ; ङ, कलावर्णपदं मनुं । 5. ख, भाल । 6. ङ, मूलान्त । 7. ङ, पापमुक्तः ।
8. ख, परानन्दमयो । 9. ख, वदति । 10. ङ, वेधकं तत्तत् ।
11. ङ, प्रबुद्धः सहसा शिष्यस्तत्सौख्यं बहुधेश्वरि ।
12. ख, ङ, न पुनर्जन्मतां व्रजेत् । 13. ङ, देवि ।

आनन्दश्चैव कम्पश्चोद्भवो घूर्णा[1] कुलेश्वरि।
निद्रा मूर्च्छा च वेधस्य[2] षडवस्थाः प्रकीर्त्तिताः ॥ ६४ ॥
दृश्यन्ते षड्गुणा ह्येते वेधकाले[3] कुलेश्वरि।
वेधितो[4] यत्र कुत्रापि तिष्ठेन्मुक्तो न संशयः ॥ ६५ ॥
वेधदीक्षाकरो लोके श्रीगुरुर्द्दुर्लभः प्रिये।
शिष्योऽपि दुर्लभस्तादृक् पुण्ययोगेन लभ्यते।
न दद्याद् यस्य कस्यापि इत्याज्ञा परमेश्वरि ॥ ६६ ॥
कुलद्रव्यैः समभ्यर्च्य कुलचक्रं[5] विधानतः।
शिष्याय दर्शयेद्देवि दीक्षैषा कौलिकी स्मृता ॥ ६७ ॥
कुलद्रव्यं[6] मुखे पूर्य पञ्चगव्या[7]मृतान्वितम्।
अभिषिञ्चेद् गुरुः शिष्यं गण्डूषाख्या समीरिता ॥ ६८ ॥
सजीव[8]मीनयुक्तेन सुरया पूरितेन च।
पञ्चामृतैः सुसम्पूर्णशङ्खेन कलसेन वा।
अभिषेकं ततः कुर्याद्ब्राह्मे तत् कथितं प्रिये[9] ॥ ६९ ॥
मीनस्तु लम्बिका देवि वक्त्रं कलस उच्यते[10]।
पञ्चगव्या[11]मृतापूर्णं शिष्यं तेनाभिषेचयेत् ॥ ७० ॥
अयं[12] सिद्धाभिषेकः स्यादाचार्यस्यापि[13] पार्वति।
त्रिकालं दन्तकाष्ठञ्च[14] पुष्पाञ्जलिरपि[15] प्रिये ॥ ७१ ॥
शङ्खे वेद[16]कलान्यासस्तज्ज्ञानञ्चाष्टधा[17] भवेत्।
समयो[18] दन्तकाष्ठेन साधकः कुसुमाञ्जलिः ॥ ७२ ॥

---

1. ख, घूर्णः। 2. क, वेधस्थाः। 3. ङ, वेधनेन।
4. क, वेधतो; ङ, वेधको। 5. ङ, कुलद्रव्यं।
6. ख, सिद्धद्रव्यं; ङ, शिवद्रव्यं। 7. ख, पञ्चव्योमा।
8. क, सञ्जीव; ङ, सबीज।
9. ख, बाह्येन कथिता पुनः; ङ, बाह्यतः कथितं प्रिये।
10. ङ, वज्रं कलसमुच्यते। 11. ख, पञ्चव्योमाऽमृतं।
12. ङ, अहं। 13. ङ, दाचार्योऽपि च।
14. क, स्वीकारदन्तकाष्ठश्च। 15. क, ततः। 16. ङ, शङ्खोदके।
17. ख, शङ्खो बद्धश्चाभिषेकवेधकश्चाष्टधा। 18. ख, समयां।

पुत्रं[1] शङ्काभिषेकेण बोधको वेधसंज्ञया[2] ।
पूर्णाभिषेकेणाचार्यः[3] पञ्चावस्थाः प्रकीर्त्तिताः ॥ ७३ ॥
कुलाचारैक[4]निरता गुरुभक्ता दृढव्रताः ।
पूर्णाभिषेकपूता ये ते मुक्ताश्चेह जन्मनि[5] ॥ ७४ ॥
पूर्णाभिषेकपूता ये मृताश्च कुलनायिके ।
पुनर्लब्ध्वोत्तमं जन्म गुरुणा शिवरूपिणा ॥ ७५ ॥
शुद्धाः पूर्णाभिषेकेण शिवसायुज्यदायिना ।
तेन मुक्तिं व्रजेयुस्ते[6] शाम्भवी वाचमब्रवीत् ॥ ७६ ॥
पूर्णा[दीक्षा]भिषेकहीनो यः कौलिको म्रियते यदि ।
पिशाचत्वमवाप्नोति यावदाहूतसंप्लवम्[7] ॥ ७७ ॥
दीक्षा च द्विविधा प्रोक्ता बाह्याभ्यन्तरभेदतः ।
क्रियादीक्षा भवेद्बाह्या वेधाख्याभ्यन्तरी मता ॥ ७८ ॥
अन्तःशुद्धिर्बहिःशुद्धिर्द्विविधा परिकीर्त्तिता ।
अन्तरा च क्रियाशुद्धिर्बहिः शुद्धिश्च दीक्षया ॥ ७९ ॥
दीक्षया मोक्षदीपेन चण्डालोऽपि विमुच्यते ।
आभ्यां विना कुलेशानि[8] कौलिको नैव मुच्यते* ॥ ८० ॥
शरीरस्य न संस्कारो जायते न च कर्मणः[9] ।
आत्मनः कारयेद्दीक्षामनादिकुलकुण्डलीम् ॥ ८१ ॥
दीक्षा ह्येताः[10] कर्मसाम्ये भिन्नार्थप्रतिपादिकाः ।
अभिसन्धानतो देवि[11] देशिकोत्तमशिष्ययोः ॥ ८२ ॥

---

* ङ पुस्तके पद्यार्द्धमिदं नास्ति ।

1. ख, पुनः
2. क, बोधकं सजलेन च; ग, घ, वेधकं सज्जलेन च; ङ, बोधकं सज्जलेन च । 3. ङ, नाचार्यं । 4. ङ, कुलाचारेण ।
5. ङ, कर्मणि । 6. ङ, व्रजेदेव 7. ङ, दाभूतसप्लवम् ।
8. क, आवाभ्याञ्च विना देवि ।
9. ख, न जातेर्न च कर्मणा ; ङ, न जातिर्न च कर्मणः ।
10. क, दीक्षयेत्तु ; ग, दीक्षयता ; घ, दीक्षीयता ; ङ, दीक्षायाता ।
11. क, ख, ग, घ, अभिसन्धानकृद् यस्तु ।

मन्त्रौषधैर्यथा हन्याद्विषशक्ति कुलेश्वरि ।
पशुपाशं तथा छिन्द्याद्दीक्षया मन्त्रवित् क्षणात् ॥ ८३ ॥
अस्मात् प्रविततादुन्धात् परसंस्थानबोधकात्[1] ।
दीक्षैव मोक्षयेत् पूर्वं दिव्यं धाम नयत्यपि ॥ ८४ ॥
उपपातकलक्षाणि महापातककोटिशः ।
क्षणाद्दहति देवेशि दीक्षा हि विधिना कृता ॥ ८५ ॥
यया चोन्मीलितात्मानो भवन्ति पशवः शिवाः ।
सा दीक्षा ह्युदिता देवि पशुपाशविमोचिका[2] ॥ ८६ ॥
यया दीक्षितमात्रेण जायन्ते प्रत्ययाः प्रिये ।
सा दीक्षा मोक्षदा ज्ञेया शेषास्तु जनसेविकाः ॥ ८७ ॥
उपासनाशतेनापि यां विना नैव सिध्यति[3] ।
तां दीक्षामाश्रयेद् यत्नात् श्रीगुरोर्मन्त्रसिद्धये ॥ ८८ ॥
रसेन्द्रेण यथा विद्धमयः सुवर्णतां व्रजेत् ।
दीक्षाविद्धस्तथा ह्यात्मा शिवत्वं लभते प्रिये ॥ ८९ ॥
दीक्षाग्निदग्धकर्मासौ मायाविच्छिन्नबन्धनः ।
गतः परां ज्ञानकाष्ठां[4] निर्बीजस्तु शिवो भवेत् ॥ ९० ॥
गतं शूद्रस्य शूद्रत्वं विप्रस्यापि च विप्रता ।
दीक्षासंस्कारसम्पन्ने जातिभेदो न विद्यते ॥ ९१ ॥
शिवलिङ्गे शिला[5]बुद्धिं कुर्वन् यत् पापमश्नुते ।
दीक्षितश्चापि पूर्वत्वस्मृत्या तत् पापमाप्नुयात्* ॥ ९२ ॥

---

* ङ पुस्तके पद्यार्द्धमिद नास्ति ।

1. क, अस्मात् प्रतिततादुन्धात् परमस्थानबोधनात्; ख, पशुसंस्थानबन्धनात्; ङ, अकस्मात् प्रतितत्त्वेन्धात् परसंस्थानबोधनात् ।

2. ड, चण्डपापविशोधिका ।

3. ड, या चिन्ता नैव पश्यति । 4. ड, गतां परां ज्ञाननिष्ठां ।

5. ङ, शिवां ।

दार्वश्मलोहमृद्रत्न[1]जातिलिङ्गप्रतिष्ठितम् ।
यथोच्यते तथा शुद्धाः[2] सर्ववर्णास्तु दीक्षिताः ॥ ९३ ॥
येन पूजितमात्रेण चाब्रह्मभुवनान्तिकम्[3] ।
पूजितं तेन सर्वं स्याद्दीक्षितेन न संशयः ॥ ९४ ॥
दीक्षितस्य न कार्यं स्यात्तपोभिर्नियमव्रतैः ।
न तीर्थक्षेत्रगमनैर्न च शारीरयन्त्रणैः ॥ ९५ ॥
अदीक्षिता ये कुर्वन्ति जपपूजादिकाः क्रियाः ।
न फलन्ति प्रिये तेषां शिलायामुप्तबीजवत् ॥ ९६ ॥
देवि दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः ।
तस्मात् सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत् ॥ ९७ ॥
द्विजो यो दीक्षितः पश्चादन्त्यजः पूर्वदीक्षितः ।
द्विजः कनिष्ठः स ज्येष्ठ इति शास्त्रार्थनिर्णयः ॥ ९८ ॥
गुरुशक्तिसुतानाञ्च यो वा स्यात्[4] पूर्वदीक्षितः ।
गुरुवत्तेन[5] ते पूज्या नावमान्याः कथञ्चन ॥ ९९ ॥
शिष्यो दीक्षितमात्रश्चेद् यदि स्वर्गं गतो गुरुः ।
एकसन्तानकेनैव पूर्णसंस्कारमाचरेत्[6] ॥ १०० ॥
दर्शनेषु च सर्वेषु गुरुणा ज्ञानशालिना ।
दीक्षितो यस्तु विधिना स मुक्तो नापरः प्रिये ॥ १०१ ॥
अधिवासन[7]पूर्वन्तु चक्रपूजापुरःसरम् ।
दीक्षया शोधयेच्छिष्यमन्यथा निष्फलं भवेत् ॥ १०२ ॥
शूद्र[8]सङ्करजातीनामादि[9]शुद्धिर्विधीयते ।
पादोदक[10]प्रदानाद्यैः[11] कुर्यात् पाप[12]विमोचनम् ॥ १०३ ॥

---

1. ङ, देवेऽश्मलोहसद्रत्न ।
2. ङ, शुद्धया । 3. ख, भुवनान्तरम् ।
4. ख, यो भवेत् । 5. ङ, गुरवस्तेन ।
6. क, पूर्वसंस्कारमाचरेत्; ख, पूर्णदीक्षां समाचरेत्; ङ, पूर्णसंख्यां समाचरेत् । 7. ङ, वासश्च । 8. ङ, शुद्ध ।
9. ख, नां नात्र । 10. ङ, पादुकादि ।
11. क, प्रणामाद्यैः । 12. ङ, पाश ।

एकाब्देन द्विजो योग्यः क्षत्रियो वत्सरद्वयात् ।
वैश्यो योग्यस्त्रिभिर्वर्षैश्चतुर्भिः शूद्र एव च ॥ १०४ ॥
विधवायाः सुतादेशात् कन्यायाः पितुराज्ञया ।
नाधिकारः स्वतो नार्या भार्याया[1] भर्त्तुराज्ञया ॥ १०५ ॥
स्याद्वेदाध्ययने शूद्रो नाधिकारी यथा प्रिये[2] ।
तथैवादीक्षितश्चापि नाधिकारी कुलेश्वरि ॥ १०६ ॥
श्रीगुरुं गुरुपत्नीञ्च तत्पुत्रं शक्तिकौलिकान्[3] ।
दीक्षित[4]स्तोषयेद्देवि यथाविभवविस्तरम्[5] ॥ १०७ ॥
इति ते कथितं किञ्चित् परीक्षा गुरुशिष्ययोः ।
दीक्षाभेदादिकं देवि किम्भूयः श्रोतुमिच्छसि ॥ १०८ ॥

इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये
सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे
ऊर्द्ध्वाम्नायतन्त्रे गुरुशिष्यपरीक्षाकथनं
नाम चतुर्दश उल्लासः ॥ * ॥

---

1. ङ, नाधिकारो सुतो नार्यो भार्यया ।
2. ङ, भवेत् ।
3. ङ, सैनिकान् ।
4. ङ, दीक्षितां ।
5. ख, विस्तरैः ।

# पञ्चदश उल्लासः।

श्रीदेव्युवाच।

कुलेश श्रोतुमिच्छामि पुरश्चरणलक्षणम्।
स्थानाहारादिभेदञ्च वद मे परमेश्वर ॥ १ ॥

ईश्वर उवाच।

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि।
तस्य श्रवणमात्रेण मन्त्रतत्त्वं[1] प्रकाशते ॥ २ ॥
जपयज्ञात् परो यज्ञो नापरोऽस्तीह कश्चन।
तस्माज्जपेन धर्मार्थकाममोक्षांश्च साधयेत् ॥ ३ ॥
सर्वपादान्[2] परित्यज्य मन्त्रपादं[3] समभ्यसेत्।
अप्रमादाद् भवेत् सिद्धिः प्रमादादशुभं[4] फलम्[5] ॥ ४ ॥
भोगापवर्गसङ्कल्पकल्पव्रतशुभो[6] जपः।
जपध्यानमयं[7] योगं[4] तस्माद्देवि समाचरेत् ॥ ५ ॥
आब्रह्मबीजदोषाश्च नियमातिक्रमोद्भवाः।
ज्ञानाज्ञानकृताः[9] सर्वे प्रणश्यन्ति जपात् प्रिये ॥ ६ ॥
संसारे दुःखभूयिष्ठे[10] यदीच्छेत् सिद्धि[11]मात्मनः।
पञ्चाङ्गोपासनेनैव मन्त्रजापी व्रजेत् सुखम्[12] ॥ ७ ॥
पूजा त्रैकालिकी नित्यं जपस्तर्पणमेव च।
होमो ब्राह्मणभुक्तिश्च पुरश्चरणमुच्यते ॥ ८ ॥

---

1. क, मन्त्रतन्त्रः। 2. ङ, सर्वधर्मान्। 3. ड, मन्त्रराजं।
4. ख, प्रमादाच्छाश्वतं। 5. ख, पदं; ङ, भवेत्।
6. ङ, भोगापवर्गसङ्कल्पैः कल्पव्रतमृते। 7. ख, ड, समं।
8. क, मार्गं। 9. ख, ज्ञानङ्कृताः।
10. ङ, संसारदुःखभूमेश्च। 11. ग, शुभ।
12. क, व्रजेत् प्रिये; ग, प्रसिध्यति।

यद् यदङ्गं विहीयेत तत्संख्याद्विगुणो जपः ।
कुर्याद् द्वित्रिचतुःपञ्चसंख्यां वा साधकः प्रिये ॥ ९ ॥
कुर्वीत[1] चाङ्गसिद्ध्यर्थं तदशक्तौ स भक्तितः[2] ।
तच्चेदङ्गं[3] विहीयेत मन्त्री नेष्टमवाप्नुयात् ॥ १० ॥
अन्नैश्चतुर्विधैर्देवि पदार्थैः षड्रसान्वितैः ।
सुभोजितेषु विप्रेषु सर्वं हि सफलं भवेत् ॥ ११ ॥
सम्यक्सिद्धैकमन्त्रस्य पञ्चाङ्गोपासनेन च ।
सर्वमन्त्राश्च सिध्यन्ति त्वत्प्रसादात्[4] कुलेश्वरि ॥ १२ ॥
उपदेशस्य सामर्थ्यात् श्रीगुरोश्च प्रसादतः[5] ।
मन्त्रप्रभावाद्भक्त्या[6]च मन्त्रसिद्धिः प्रजायते ॥ १३ ॥
सिद्धमन्त्राद् गुरोर्लब्धो मन्त्रो यः सिद्धिभाग्भवत्[7] ।
पूर्वजन्मकृताभ्यासान्मन्त्रो वा शीघ्रसिद्धिदः ॥ १४ ॥
दीक्षापूर्वं कुलेशानि पारम्पर्यक्रमागतम् ।
न्यायलब्धश्च यो मन्त्रः स च सिद्धो न संशयः ॥ १५ ॥
मासमात्रं जपेन्मन्त्रं भूतलिप्या तु संपुटम्[8] ।
क्रमोत्क्रमात्[9] सहस्रन्तु तस्य सिद्धो भवेन्मनुः* ॥ १६ ॥
त्रिषष्ट्यक्षरसंयुक्तमातृकाक्षरसंपुटम् ।
मण्डलं पूजयेन्मन्त्रं[न्त्री]मातृकावर्णमुच्चरन् ॥ १७ ॥

---

* "सहस्रं प्रजपेन्मन्त्रं मातृकाक्षरसंपुटम् ।
अनुलोमविलोमेन मन्त्रसिद्धिः प्रजायते" ॥
ख, ङ पुस्तकयोः इत्यधिकः ।

1. ङ, कुर्वते ।
2. ङ, तदशक्तेन भक्तितः । 3. ख, स चेदङ्गं; ङ, नचेदङ्गं ।
4. ख, प्रभावात्: 5. ख, प्रभावतः । 6. ङ, मन्त्रप्रभावशक्त्या ।
7. ङ, स्वमन्त्राक्षरसंयुक्तमातृकाक्षरमम्बिके ।
8. ख, मन्त्रं जप्यान्महादेवि भूतलिप्यर्णसंपुटम् ।
9. ङ, क्रमात् क्रमात् ।

मातृकाजपमात्रेण मन्त्राणां कोटिकोटयः ।
जपिताः स्युर्न सन्देहो यतः सर्वं तदुद्भवम्[1] ॥ १८ ॥
अनेककोटिमन्त्राणि चित्ताकुलकराणि च ।
मन्त्रं गुरुकृपा[2]प्राप्तमेकं स्यात् सर्वसिद्धिदम् ॥ १९ ॥
यदृच्छया श्रुतं मन्त्रं दृष्टेनापि छलेन च ।
पत्रे स्थितं वा चाध्याप्य[3] तज्जपः स्यादनर्थकृत्[4] ॥ २० ॥
पुस्तके लिखितान्मन्त्रान् विलोक्य प्रजपन्ति ये ।
ब्रह्महत्यासमं तेषां पातकं व्याधिदुःखदम्[5] ॥ २१ ॥
पुण्यक्षेत्रं नदीतीरं गुहा पर्वतमस्तकम् ।
तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं वनम् ॥ २२ ॥
उद्यानानि विविक्तानि विल्वमूलं तटं गिरेः ।
देवतायतनं कूलं समुद्रस्य निजं गृहम् ॥ २३ ॥
साधनेषु[6] प्रशस्तानि स्थानान्येतानि मन्त्रिणाम् ।
अथवा निवसेत्तत्र यत्र चित्तं प्रसीदति ॥ २४ ॥
सूर्यस्याग्ने[7]र्गुरोरिन्दोर्दीपस्य च जलस्य च[8] ।
गोविप्र[9]कुलवृक्षाणां सन्निधौ शस्यते जपः ॥ २५ ॥
गृहे शतगुणं विद्या[10]द्गोष्ठे लक्षगुणं भवेत् ।
कोटिर्देवालये पुण्यमनन्तं शिवसन्निधौ ॥ २६ ॥
म्लेच्छदुष्टमृगव्याल[11]शङ्कातङ्कविवर्जितः ।
एकान्तपावने निन्दारहिते भक्तिसंयुते ॥ २७ ॥
स्वदेशे धार्मिके देशे सुभिक्षे निरुपद्रवे ।
राज[12]भक्तजनस्थाने निवसेत्तापसाश्रये[13] ॥ २८ ॥

---

1. ख, उदितास्तु न सन्देह एतत् सर्व तदुद्भवम् ।
2. ङ, गुरुजपात् । 3. ख, गाथा स्यात् ।
4. क, तज्जपेन ह्यनर्थकृत्; ख, तज्जपः स्यादनर्थकः; ङ, तज्जपेन्न ह्यनर्थकृत् । 5. ग, परिकीर्त्तित ।
6. ख, साधकाना । 7. ख, सूयस्याग्न । 8. ङ, स्यन्दनस्य च ।
9. ग, घ, गोवृक्ष; ङ, गोरक्ष । 10. ङ, विन्ध्या ।
11. ख, व्याघ्र । 21. ङ, रम्ये । 13. ख, श्रमे ।

राजानः सचिवा राज्ञां पुरुषाः प्रभवो[1] जनाः ।
चरन्ति येन मार्गेण न वसे[2]त्तत्र मन्त्रवित् ॥ २९ ॥
जीर्णदेवालयोद्यानगृह[3]वृक्षतलेषु च ।
नदीतडागकूपेषु[4] भूच्छिद्रादिषु नो वसेत्[5] ॥ ३० ॥
दीपनाथमयष्ट्वा यो जपपूजादिकं चरेत्[6] ।
तत्फलं गृह्यते तेन तस्यायासः फलं भवेत्* ॥ ३१ ॥
वंशाश्मधरणीदारुतृणपल्लवनिर्मितम् ।
वर्जयेदासनं धीमान् दारिद्र्यव्याधिदुःखदम् ॥ ३२ ॥
तूलकम्बलवस्त्राणां सिंह[7]व्याघ्रमृगाजिनम् ।
कल्पयेदासनं धीमान् सौभाग्यज्ञानवृद्धिदम् ॥ ३३ ॥
पद्मस्वस्तिकवीरादिष्वासनेषूपविश्य च ।
जपार्च्चनादिकं कुर्यादन्यथा निष्फलं भवेत् ॥ ३४ ॥
द्वादशावर्त्तयन् बुद्ध्या प्रणवन्तु त्रिमात्रकम्[8] ।
मुञ्चेत् पिङ्गलया वायुमन्तःस्थं रेचको भवेत् ॥ ३५ ॥
षोडशावर्त्तयन्[9] तारं पूरयेद्वाह्यमारुतम् ।
शनकैरिडया बद्ध्वा[10] पूरकं परिकीर्त्तितम् ॥ ३६ ॥
द्वादशावर्त्तयन्[11] तारं वायुं मध्ये च कुम्भयेत् ।
शोषयेद्वायुबीजेन देहशोषणमीरितम्† ॥ ३७ ॥
पुनश्च पूर्वव[12]द्वायुं विरेच्यापूर्य कुम्भयेत्[13] ।
दहेत्[14] दहनबीजेन देह[15]दाहनमीरितम् ॥ ३८ ॥

* ङ पुस्तके श्लोकार्द्धमिदं नास्ति ।
† ङ पुस्तके श्लोकार्द्धमिदं नास्ति ।
1. ख, राजपुरुषा बहवो ; ङ, राज्ञः प्रभवाः पुरुषा ।
2. ङ, निवसे । 3. ख, दग्ध । 4. ख, कूटेषु ।
5. ङ, विशेत् । 6. ङ, दीपनाथमविज्ञाय यो जपादिकमाचरेत् ।
7. ख, चित्रकम्बलवस्त्राणि पद । 8. ख, त्रिमानकम् ; ङ, त्रिमातृकम् । 9. ख, वर्त्तयेत् ; ङ, वर्त्तकं । 10. ख, विद्वान् ।
11. ङ, वर्त्तकं । 12. ख, पूरये ।
13. क, रेचयेच्च सदा पुनः । 14. ङ, देहं । 15. ख, पाप ।

पुनश्च पूर्ववद्वायुं विरेच्यापूर्य कुम्भयेत् ।
शिवकुण्डलिनीयोगस्यन्दनामृतधारया ।
आपादमस्तकं देवि प्लावयेत् प्लावनं[1] भवेत् ॥ ३९ ॥
जपध्यानं विनाऽगर्भः सगर्भस्तद्विपर्ययात्[2] ।
अगर्भाद् गर्भ[3]संयुक्तः प्राणायामः शताधिकः ॥ ४० ॥
तपांसि तीर्थयात्राद्या मखदानव्रतादयः ।
प्राणायामस्य तस्यैते कलां नार्हन्ति षोडशीम् ॥ ४१ ॥
मानसं वाचिकं पापं कायिकं वापि यत् कृतम् ।
तत् सर्वं निर्दहेच्छीघ्रं प्राणायामत्रयं शिवे[4] ॥ ४२ ॥
दह्यते ध्मार्यमानानां धातूनाञ्च यथा मलम् ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य संयमात् ॥ ४३ ॥
प्राणायामैर्विशुद्धात्मा यद् यत् कर्म करोति हि ।
तत्तत् फलत्यसन्देहस्त्व[5]प्रयत्नेन वा कृतम् ॥ ४४ ॥
आगमोक्तेन मार्गेणाभ्यासं[6] नित्यं करोति यः ।
देवताभावमाप्नोति मन्त्रसिद्धिः प्रजायते ॥ ४५ ॥
यो न्यासकवचच्छन्दो[7]मन्त्रं जपति तं[8] प्रिये ।
विघ्ना दृष्ट्वा पलायन्ते सिंहं दृष्ट्वा यथा गजाः ॥ ४६ ॥
अकृत्वा न्यासजालं यो मूढात्मा[9] प्रजपेन्मनुम् ।
बाध्यते सर्वविघ्नैश्च व्याघ्रैर्मृगशिशुर्यथा[10] ॥ ४७ ॥
अक्षमाला द्विधा प्रोक्ता कल्पिताऽकल्पितेति च ।
कल्पिता मणिभिः क्लृप्ता[11] मातृका स्यादकल्पिता ॥ ४८ ॥

---

1. ख, शरीरं प्रावणं; ङ, प्रपयेत् प्लावनं ।
2. ङ, विपर्ययः ।
3. ङ, अगर्भगर्भ ।
4. ख, ङ, त्रयेण वै ।
5. ग, घ, फलस्य सन्देहस्त्व ।
6. ख, ङ, मार्गेण न्यासं ।
7. ङ, कवचेनैव ।
8. ङ, च ।
9. ख, केवलं; ङ, मूढत्वात् ।
10. ङ, सिंहैर्मृगपशुर्यथा ।
11. ग, घ, मणिभिः प्रोक्ता; ङ, मालाभिः क्लृप्ता ।

आदिक्षान्ताक्षवर्णत्वा[1]दक्षमालेति कीर्त्तिता ।
अनुलोमविलोमाभ्यां गणयेन्मन्त्रवित्तमः ॥ ४९ ॥
एकैकमङ्गुलीभिः स्याद्रेखाभिर्द्दशधा फलम्[2] ।
मणिभिः[3] शतसाहस्रं माणिक्या[4]ऽनन्तमुच्यते ॥ ५० ॥
त्रिंशद्भिः स्याद्धनं पुष्टिः सप्तविंशतिभिर्भवेत् ।
पञ्चविंशतिभिर्म्मोक्षं पञ्चदश्याभिचारके ।
पञ्चाशद्भिः कुलेशानि सर्वसिद्धिरुदीरिता[5] ॥ ५१ ॥
अङ्गुष्ठेन च मोक्षः स्यात्तर्जनी शत्रुनाशिनी* ।
मध्यमां धनदां विद्यात् शान्तिकर्मण्यनामिका ।
कनिष्ठा स्तम्भन्याकर्षण्यङ्गुली सुप्रकीर्त्तिता ॥ ५२ ॥
एतज्जपिष्यामीत्यादौ[6] सङ्कल्प्य मन्त्रवित्तमः[7] ।
स्थिरासनो जपित्वाऽथ देव्यै सोदकमर्पयेत् ॥ ५३ ॥
उच्चैर्जपोऽधमः प्रोक्त उपांशुर्मध्यमः स्मृतः ।
उत्तमो मानसो देवि त्रिविधः कथितो जपः ॥ ५४ ॥
अतिह्रस्वो व्याधिहेतुरतिदीर्घस्तपःक्षयः ।
अक्षराक्षरसंयुक्तो यो मन्त्रः स न सिध्यति[8] ॥ ५५ ॥
मनसा यः स्मरेत् स्तोत्रं वचसा वा मनुं जपेत् ।
उभयं निष्फलं देवि भिन्नभाण्डोदकं यथा । ॥ ५६ ॥

---

* ख पुस्तके अस्मादारभ्य सार्द्धश्लोकस्थले—
"अङ्गुष्ठे मोक्षस्तर्जन्यां शत्रुघ्नी चैव मध्यमा ।
वश्यदाऽनामिका शान्तौ कनिष्ठा स्तम्भकारिणी" ॥
इत्येकश्लोकात्मकः पाठः ।

1. ख, आदिक्षान्ताक्षरान्मन्त्रा ; ङ, आदिक्षान्ताक्षरान्तरत्वा ।
2. ख, एकैकमञ्जलिभिः स्याद्रेखाभिर्द्वादशाङ्गुलम् ।
3. ङ, मालाभिः । 4. ख, ङ, मालिन्या । 5. ङ, रितीरिता ।
6. ख, ङ, एतावच्च जपिष्यामीति । 7. ख, ङ, मन्त्रवित् ।
8. ख, अक्षराक्षरसंयुक्तं जपेन्मौक्तिकहारवत् ; ङ, अक्षराक्ष-संयुक्त्या जपेन्मौक्तिकपङ्क्तिवत् ।

जातसूतकमादौ स्यात्तदन्ते मृतसूतकम् ।
सूतकद्वयसंयुक्तो यो मन्त्रः[1] स न सिध्यति ॥ ५७ ॥
आद्यन्तरहितं[2] कृत्वा मन्त्रमावर्त्तयेद्धिया[3] ।
सूतकद्वयनिर्म्मुक्तो[4] यो मन्त्रः सर्वसिद्धिदः[5] ॥ ५८ ॥
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ।
शतकोटिजपेनापि तस्य सिद्धिर्न जायते ॥ ५९ ॥
सुप्तबीजाश्च[6] ये मन्त्रा न दास्यन्ति फलं प्रिये ।
मन्त्राचैतन्यसहिताः सर्वसिद्धिकराः स्मृताः ॥ ६० ॥
चैतन्यरहिता मन्त्राः प्रोक्ता वर्णास्तु केवलम् ।
फलं नैव प्रयच्छन्ति लक्षकोटिजपादपि ॥ ६१ ॥
मन्त्रोच्चारे कृते यादृक्[7] स्वरूपं प्रथमं भवेत् ।
शतैः सहस्रैर्लक्षैर्वा कोटिजापेन तत् फलम् ॥ ६२ ॥
हृत्कण्ठ[8]ग्रन्थिभेदश्च सर्वावयववर्द्धनम् ।
आनन्दाश्रु च पुलको देहावेशः कुलेश्वरि ।
गद्‌गदोक्तिश्च सहसा जायते नात्र संशयः ॥ ६३ ॥
सकृदुच्चरितेऽप्येवं मन्त्रे चैतन्यसंयुते[9] ।
दृश्यन्ते प्रत्यया यत्र पारम्पर्यं तदुच्यते ॥ ६४ ॥
रुद्धः[10] कूटाक्षरो मुग्धो बद्धः क्रुद्धश्च भेदितः ।
बालः कुमारो युवकः प्रौढो वृद्धश्च गर्वितः ॥ ६५ ॥
स्तम्भितो मूर्च्छितो मत्तः[11] कीलितः खण्डितः शठः[12] ।
मन्दः[13] पराङ्मुखश्छिन्नो बधिरोऽन्धस्त्वचेतनः ॥ ६६ ॥

---

1. ङ, यो मन्त्रः । 2. ङ, अतस्तद्रहितं ।
3. क, द्विधा ; ङ, सदा । 4. ङ, सूतकद्वयसंयुक्तो ।
5. ङ, स हि सिध्यति । 6. ख, ङ, गुप्तवीर्याश्च ।
7. क, ग, घ, मनसोच्चारणकृतः ।
8. ख, हृत्कम्पो ; ङ, हृदये । 9. ङ, संपुटे ।
10. ङ, बहु । 11. ग, घ, नष्ट ; ङ, कष्ट ।
12. ख, ङ, प्रिये । 13. ङ, मन्त्रः ।

किङ्कर:[1] क्षुधितः स्तब्ध:[2] स्थानभ्रष्टश्च[3] पीडितः ।
निःस्नेहो विकलो ध्वस्तो[4] निर्जीव:[5] खण्डितारिक:[6] ॥ ६७ ॥
सुप्त[7]स्तिरस्कृतो नीचो[8] मलिनश्च दुरासदः ।
निःसत्त्वो निर्जितो[9] दग्धश्चपलश्च भयङ्करः ॥ ६८ ॥
निस्त्रिंशो निन्दितः क्रूर:[10] फलहीनो निकृन्तन:[11] ।
निर्वीर्यो[12] भ्रमितो[13] शप्त[14] ऋणक्लिष्टोऽङ्गहीनक:[15] ।
जडो रिपु[16]रुदासीनो लज्जितो मोहितोऽलस:[17] ॥ ६९ ॥
षष्टयेतान्[18] मन्त्रदोषांश्च योऽज्ञात्वा प्रजपेन्मनुम्[19] ।
सिद्धिर्न जायते तस्य लक्षकोटिजपादपि ॥ ७० ॥
कथ्यन्ते दश संस्कारा मन्त्रदोषहराः प्रिये ।
जननं जीवनं पश्चात्ताडनं बोधनं ततः ॥ ७१ ॥
अभिषेकोऽथ विमलीकरणाप्यायने तथा ।
तर्पणं दीपनं गुप्तिः संस्काराः कुलनायिके ॥ ७२ ॥
शाणोल्लोढानि शस्त्राणि[20] यथा स्युर्निशितानि वै ।
मन्त्राश्च स्फूर्त्तिमायान्ति संस्कारैर्दशभिस्तथा ॥ ७३ ॥
भक्ष्यं हविष्यं शाकादि विहितानि फलान्यपि[21] ।
मूलं शक्तुं यवानाञ्च[22] शस्तान्येतानि मन्त्रिणाम् ॥ ७४ ॥

---

1. क, ङ, केकरः । 2. क, क्लृप्तः; ग, घ, सुप्तः; ङ, स्वप्नः ।
3. ङ, दुष्टश्च । 4. क, ख, स्तब्धो ।
5. क, ग, घ, निर्बीजः; ख, निर्वीर्यः ।
6. क, खण्डितारिकौ; ख, सुकण्ठितः; ग, घ, खण्डितानिकौ ।
7. ख, सुत । 8. ङ, लीढो । 9. ङ, निर्दयो ।
10. ग, घ, ङ, विकृताचारः । 11. ख, निरंसकः ।
12. ख, ङ, निर्बीजः । 13. घ; ङ, भूमितः । 14. ख, रुक्ष ।
15. क, ग, रुग्नः कष्टोऽङ्गहीनकः; घ, रुग्नः कृष्णोऽङ्गहीनकः; ङ, रुक्षः कृष्टोऽङ्गहीनतः । 16. ख, व्रीडितारि ।
17. ङ, मोहितः प्रिये । 18. ङ, सन्त्येतान् ।
19. क, ग, घ, ङ, ज्ञात्वा पश्चाज्जपेत् प्रिये । 20. ङ, शास्त्राणि ।
21. ग, घ, शाकानि विहितानि फल पयः । 22. ङ, यवोत्पन्नं ।

यस्यान्नपानपुष्टाङ्गः[1] कुरुते धर्मसञ्चयम् ।
अन्नदातुः फलं चार्द्धं कर्त्तुश्चार्द्धं न संशयः ॥ ७५ ॥
तस्मात् सर्वप्रयत्नेन परान्नं वर्जयेत् सुधीः ।
पुरश्चरणकाले च काम्यकर्मस्वपीश्वरि[2] ॥ ७६ ॥
जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात् ।
मनो दग्धं परस्त्रीभिः कार्यसिद्धिः कथं भवेत्[3] ॥ ७७ ॥
इन्द्वग्निरुद्रग्रहदृग्[4]वेदार्कदिक्षडष्टसु ।
षोडशमनुवाणाब्धितिथित्रयोदशस्वपि[5] ॥ ७८ ॥
लिखेत् षोडशकोष्ठेषु मातृकार्णान् विचक्षणः ।
स्वनामाद्यक्षराद् यावन्मन्त्राद्यक्षरदर्शनम् ॥ ७९ ॥
सिद्धादीन् कल्पयेन्मन्त्री कुर्यात् साध्यादिभिः[6] पुनः ।
चतुश्चतुर्विभागेन सिद्धादीन् गणयेत् पुनः * ॥ ८० ॥
सिद्धसिद्धो जपात् सिद्धो द्विगुणात् सिद्धसाध्यकः ।
सिद्धसुसिद्धोऽर्द्धजपात् सिद्धारिर्हन्ति बान्धवान् ॥ ८१ ॥
साध्यसिद्धोऽतिसंक्लेशात् साध्यसाध्यो निरर्थकः ।
साध्यसुसिद्धो भजनात् साध्यारिर्हन्ति गोत्रजान् ॥ ८२ ॥
सुसिद्धसिद्धोऽर्द्धजपात्तत्साध्यस्तु यथोक्ततः ।
तत्सुसिद्धो ग्रहादेव सुसिद्धारिः स्वगोत्रहा[7] ॥ ८३ ॥
अरिसिद्धः सुतं हन्यादरिसाध्यस्तु योषितम् ।
तत्सुसिद्धः कुलं हन्ति स्वात्मानं हन्ति तद्रिपुः ॥ ८४ ॥
सिद्धार्णा बान्धवाः प्रोक्ताः साध्यास्ते सेवकाः स्मृताः ।
सुसिद्धाः पोषका ज्ञेयाः शत्रवो घातकाः स्मृताः ॥ ८५ ॥

---

* ङ पुस्तके पद्यार्द्धमिदं नास्ति ।

1. घ, यस्यान्नपानदुष्टाङ्गः ; ङ, यस्यान्नपानमश्नाति ।
2. ङ, कामकर्मस्वपीश्वरि । 3. ख, कथं सिद्धिर्वरानने ।
4. ङ, मृग् । 5. क, ग, घ, स्वरशक्रेष्वद्रितिथित्रयोदशस्वपि क्रमात् ।
6. ङ, सिद्धादिभिः ।
7. क. स्मरणात्तत्सुसिद्धस्तु तदरिर्हन्ति सेवकान् ।

बान्धवा नववाणैकाः स्युर्द्विषड्दश सेवकाः ।
वह्निरुद्रसुताश्चैव द्वादशाः पोषकाः स्मृताः[1]* ॥ ८७ ॥
प्रापलाभो पटु प्राह्यं रुद्रस्याद्रिरुरुः करम्[2] ।
लोक लोप पटु प्रायः खली यो भेषु भेदिताः ।
वर्णाः क्रमात् स्वरान्तौ[3] तु रेवत्यंशगतौ तदा ॥ ८८ ॥
जन्म सम्पद् विपत् क्षेम प्रत्यरिः साधको वधः[4] ।
मित्रं परममित्रञ्च जन्मादीनि पुनः पुनः ॥ ८९ ॥
वालं गौरं खुरं[5] शोणं शमीशोभेति राशिषु[6] ।
क्रमेण भेदिता वर्णाः कन्यायां शादयः स्मृता[7] ॥ ९० ॥
लग्नो धनं भ्रातृबन्धुपुत्रशत्रुकलत्रकाः ।
मरणं धर्मकर्मायिव्यया द्वादश राशयः ॥ ९१ ॥
स्वराशेर्मन्त्रराश्यन्तं गणनीयं विचक्षणैः† ।
अज्ञाते राशिनक्षत्रे नामाद्यक्षरराशितः ॥ ९२ ॥
नामाद्यक्षरमारभ्य यावन्मन्त्रा[8]दिमाक्षरम् ।
त्रिधा कृत्वा स्वरैर्भिन्द्यात्तदन्यद्विपरीतकम् ॥ ९३ ॥
कृत्वाधिकमृणं ज्ञेयं ऋणी चेन्मन्त्रवित्तमः[9] ।
स्वयमृणी चेत्तन्मन्त्रं जपेत्[10]पूर्वमृणी यतः ॥ ९४ ॥

---

* ङ पुस्तके श्लोकार्द्धमिदं नास्ति ।
† ङ पुस्तके श्लोकोऽयं नास्ति ।
1. ग, घ, वह्निरुद्रमुनयस्तु पोषका द्वादशाष्टकचतुरस्तु घातकाः ।
2. ख, ङ, प्राप लेप पटुप्राप रुद्रस्याद्रिवकं नरः ।
लोकालोकपटुप्रापघनघातेषु भेदिताः ॥
ग, घ, प्राप लोभा पटु प्राह्यं रुद्रस्याद्रिरुरुः करं ।
लोक लोप पटुः प्रायः खलोघोभेदिताः प्रिये ॥
घ पुस्तके करमित्यत्र: करः ।
3. ङ, युवान्त्यौ । 4. क, वधं ।
5. क, वालं गौरिभुवं । 6. ङ, समीनोभेति राशिषु ।
7. क, सादयः स्मृताः ग, घ, शादयः स्थिताः ।
8. क, यावद्वर्णा । 9. क, ग, घ, मन्त्र उत्तमः ।
10. क, ग, घ, त्यजेद् ।

पञ्च ह्रस्वाः पञ्च दीर्घा बिन्द्वन्ताः सन्धिसम्भवाः* ।
कादयः पञ्चशः षक्षसहान्ताश्च प्रकीर्त्तिताः ॥ ९५ ॥
वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात्[1] ।
महीसलिलयोर्मित्रमनिला[2]नलयोरपि ।
शात्रवं वैपरीत्येन मैत्रं सर्वत्र चापरम् ॥ ९६ ॥
परस्परविरुद्धानां वर्णानां यत्र सङ्गतिः ।
वर्जयेत्तादृशं मन्त्रं नाशकृत्तत् कुलेश्वरि ॥ ९७ ॥
एकाक्षरे तथा कूटे त्रैपुरे मन्त्रनायके[3] ।
स्त्रीदत्ते स्वप्नलब्धे च सिद्धादीन्नैव शोधयेत्[4] ॥ ९८ ॥
मन्त्रसिद्धोपदिष्टेषु चतुराम्नायजेषु च ।
मालामन्त्रेषु देवेशि सिद्धादीन्नैव शोधयेत् ॥ ९९ ॥
नृसिंहार्कवराहाणां प्रासादप्रणवस्य च ।
सपिण्डाक्षरमन्त्राणां सिद्धादीन्नैव शोधयेत् ॥ १०० ॥
मनोऽन्यत्र शिवोऽन्यत्र शक्तिरन्यत्र मारुतः ।
न सिध्यति वरारोहे लक्षकोटिजपादपि ॥ १०१ ॥
वादार्थं पठ्यते[5] विद्या परार्थं क्रियते जपः ।
ख्यात्यर्थं दीयते दानं कथं सिद्धिर्वरानने† ॥ १०२ ॥
धनार्थं गम्यते तीर्थं दम्भार्थं क्रियते तपः ।
कार्यार्थं देवतापूजा[6] कथं सिद्धिर्नु जायते‡ ॥ १०३ ॥
अमेध्येन तु देहेन न्यासं देवार्चनं जपम् ।
होमं कुर्वन्ति चेन्मूढास्तत् सर्वं निष्फलं भवेत् ॥ १०४ ॥

---

* ङ पुस्तके श्लोकोऽयं नास्ति ।

† ख पुस्तके इतः परं "अन्यार्थे नित्यदेवेशि न्यासं देवार्च्चनं जपं । होमं कुर्वन्ति ये मूढाः सर्वं भवति निष्फलं" इत्येकः श्लोकोऽधिको दृश्यते ।

‡ ङ पुस्तके श्लोकार्द्धमिदं नास्ति ।

1. ङ, स्थिताः । 2. क, ग, घ, मैत्री ह्यनिला ।
3. ख, नायिके ; ग, घ, मन्त्रणाय वै ।
4. ख, साधयेत् । 5. ख, वादार्थे विद्यते ।
6. क, कार्यार्थं देवता याला ; ख, काम्यार्थं देवता पूजा ।

विण्मूत्रत्यागशेषादियुक्तः[1] कर्म करोति यः।
जपा[2]र्चनादिकं सर्वमपवित्रं भवेत् प्रिये ॥ १०५ ॥
मलिनाम्बरकेशादिमुखदौर्गन्धसंयुतः।
यो जपेत्तं दहत्याशु[3] देवता सुजुगुप्सिता[4] ॥ १०६ ॥
आलस्यं जृम्भणं निद्रां क्षुतं निष्ठीवनं भयम्।
नीचाङ्गस्पर्शनं कोपं जपकाले विवर्जयेत् ॥ १०७ ॥
अत्याहारः प्रलापश्च[5] प्रजल्पो नियमाग्रहः[6]।
अन्यासङ्गश्च[7] लौल्यञ्च षड्भिर्मन्त्रो न सिध्यति ॥ १०८ ॥
उष्णीशी कञ्चुकी नग्नो मुक्तकेशो गणावृतः।
अपवित्रोत्तरीयश्चाशुचिर्गच्छंश्च नो जपेत्[8] ॥ १०९ ॥
जाड्यं दुःखं तृणच्छेदं विवादं वा मनोरथम्[9]
बहिस्तु देहवायुञ्च[10] जपकाले विवर्जयेत् ॥ ११० ॥
शान्तः शुचिर्मिताहारो भूशायी भक्तिमान् वशी।
निर्द्वन्द्वः स्थिरधीर्मौनी संयतात्मा जपेत् प्रिये ॥ १११ ॥
विश्वासास्तिक्यकरुणाश्रद्धानियमनिश्चयैः।
सन्तोषौत्सुक्यधर्मादिगुणैर्युक्तो जपेन्नरः[11] ॥ ११२ ॥
सुगन्धिपुष्पाभरणवस्त्रादिभिरलङ्कृतः।
तस्य हस्तगता सिद्धिर्नान्यस्य जपकोटितः ॥ ११३ ॥
तन्निष्ठस्तद्गतप्राणस्तच्चित्तस्तत्परायणः।
तत्पदार्थानुसन्धानं कुर्वन् मन्त्रं जपेत् प्रिये ॥ ११४ ॥

---

1. ख, विण्मूत्रोत्सङ्गसंज्ञाभिर्युक्तः। 2. ख, तपो।
3. ख, जहात्याशु। 4. ख, तिजुगुप्सितम्; ङ, देवतासु जुगुप्सितं।
5. ख, प्रयासश्च। 6. ख, नियमग्रहः। 7. ख, जनसङ्गञ्च।
8. ङ, अपवित्रोत्तरीयस्तु निर्गच्छन्न जपेत् प्रिये।
9. ख, मदमेव च।
10. ख, विरामं देहजाड्यञ्च; ङ, बहिः स्वदेहवासञ्च।
11. ख, गुरूक्तं प्रजपेत् प्रिये।

जपात् श्रान्तः पुनर्ध्यायेद्ध्यानात् श्रान्तः पुनर्जपेत् ।
जपध्यानादियुक्तस्य क्षिप्रं मन्त्रः प्रसिध्यति* ॥ ११५ ॥
इति ते कथितं किञ्चित् पुरश्चरणलक्षणम् ।
समासेन कुलेशानि किं भूयः श्रोतुमिच्छसि ॥ ११६ ॥

इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये
सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चम-
खण्डे ऊर्ध्वाम्नायतन्त्रे पुरश्चरणादि-
कथनं नाम पञ्चदश
उल्लासः ॥ १५ ॥

---

* ङ पुस्तके श्लोकार्द्धमिदं नास्ति।

# षोडश उल्लासः।

श्रीदेव्युवाच।

कुलेश श्रोतुमिच्छामि करुणामृतवारिधे।
काम्यकर्मविधानञ्च वद मे परमेश्वर ॥ १ ॥

ईश्वर उवाच।

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि।
तस्य श्रवणमात्रेण प्रयोगनिपुणो भवेत् ॥ २ ॥
मन्त्री विशुद्धहृदयः पूर्वोक्तनियमान्वितः[1]।
श्रीप्रासादपरामन्त्रं तत्त्वलक्षं जपेत् प्रिये ॥ ३ ॥
दशांशं जुहुयाद्देवि संस्कृते हव्यवाहने।
दशांशं तर्पयेद्दुग्धैः सलिलैः शालितण्डुलैः[2] ॥ ४ ॥
गन्धपुष्पाक्षताकल्पधनवस्त्रादिभिः प्रिये।
भक्ष्यभोज्यान्नपानाद्यैर्हव्यद्रव्यै[3]र्मनोहरैः ॥ ५ ॥
तोषयेद् योगिनीचक्रं यथाविभवविस्तरम्[4]।
एवं न्यासजपध्यानसहोमार्च्चनतर्पणः[5] ॥ ६ ॥
मन्त्री सिद्धमनुर्द्देवि[6] साक्षात् परशिवो भवेत्।
ततः स्वमनसोऽभीष्टान्[7] प्रयोगान् कुलनायिके ॥ ७ ॥
मन्त्रेणानेन मतिमान् साधयेद् भुक्तिमुक्तये[8]।
सिद्धमन्त्रस्य सिध्यन्ति षट् कर्माणि न संशयः।
नैव सिध्यन्त्यसिद्धस्य देवताशापमाप्नुयात् ॥ ८ ॥

---

1. ङ, विषयान्वितः।
2. ख, मधुरत्रयसंयुक्तैः सलिलैः सह तण्डुलैः।
3. ख, कुलद्रव्यै।
4. ङ, विस्तरैः।
5. ख, तर्पणैः; घ, तत्परम्।
6. ख, मन्त्रसिद्धिसाधकेन्द्रः।
7. ख, ततः समभ्यसेद्भीष्टान्।
8. ख, ङ, भक्तिमुक्तये।

काम्यप्रयोगकर्त्तॄणां परलोको न विद्यते ।
प्रयोगसिद्धिरेवैषां फलमन्यन्न तु प्रिये[1] ॥ ९ ॥
एकस्यापि विधानस्य न कुत्रापि फलद्वयम् ।
देवेशि दृश्यते तस्मान्निष्कामो देवतां यजेत्[2] ॥ १० ॥
होमतर्पणमन्त्राद्यैन्यसि[3]ध्यानविशेषकैः ।
आत्मनश्च परस्यापि षट् कर्माणि समाचरेत् ॥ ११ ॥
प्रयोगान्ते चक्रपूजां विधिनैव[4] समाचरेत् ।
लक्षमेकं जपेन्मन्त्रं न्यासध्यानसमन्वितः[5] ॥ १२ ॥
प्रयोगदोषशान्त्यर्थमात्मरक्षार्थमेव च ।
न चेत् फलं न चाप्नोति देवताशापमाप्नुयात् ॥ १३ ॥
तिथिवारञ्च नक्षत्रं योगमासर्त्तुपक्षकम्[6] ।
दीपेशं कुलचक्राणि[7] ज्ञात्वा कर्माणि साधयेत् ॥ १४ ॥
ऋषिच्छन्दोदेवताङ्गन्यासध्यानार्च्चनादिकम् ।
वीजं शक्ति कीलकञ्च[8] ज्ञात्वा मन्त्राणि साधयेत् ॥ १५ ॥
पुत्रबान्धवदाराश्च राशिवर्णानुकूलता ।
भूतमैत्रीं तथोद्यन्तं ज्ञात्वा मन्त्राणि साधयेत्* ॥ १६ ॥
मन्त्रविद्याऽभेदरुपं निद्राञ्च बोधरूपकम् ।
स्त्रीपुंनपुंसकादींश्च ज्ञात्वा कर्माणि साधयेत् ॥ १७ ॥
स्वरवर्णपदद्वित्वं विदुश्चैतन्यसूतकम् ।
ह्रस्वदीर्घप्लुतादींश्च ज्ञात्वा मन्त्राणि साधयेत्† ॥ १८ ॥

---

* श्लोकोऽयं घ, ङ पुस्तकयोः नास्ति ।
† श्लोकोऽयं घ, ङ पुस्तकयोः नास्ति ।

1. ङ, कारयेत् ।
2. ख, भजेत् क, व्रजेत् । 3. ङ, र्नाना ।
4. घ, तथा मन्त्री 5. ख, समन्वितं ।
6. घ, दिनमासर्त्तु करणयीग ऋक्षन्तु पक्षकं; ङ, दिनमावर्त्तकरण-योगमृक्षन्तु पञ्चमम् । 7. क, दीपेशकूर्मचक्राणि; ख, दीपेशं कूर्मचक्रेण; घ, दीपे च कूर्मचक्राणि; ङ, दीपेशकुलचक्राणि ।
8. ख, कीलवेधौ; घ, बीजं शक्तिकीलकौ च ।

पञ्चशुद्ध्यासनप्राणायामन्यासाक्षमालिकाः[1] ।
दोषसंस्कारमुद्रादीन्[2] ज्ञात्वा कर्माणि[3] साधयेत् ॥ १९ ॥
तथैवासनदिग्बन्धनाडीबन्धादिसङ्गतिम्[4] ।
देवताकालमुद्रादि ज्ञात्वा कर्माणि साधयेत्[5] ॥ २० ॥
साध्यसाधककर्माणि लेखनीद्रव्यपञ्चकम् ।
स्थानं यन्त्रं प्रमाणञ्च[6] ज्ञात्वा कर्माणि[7] साधयेत् ॥ २१ ॥
उत्पत्तिवासनावर्णमूर्त्तिसंस्कारसंस्थितम्[8] ।
कुण्डद्रव्यप्रमाणादीन्[9] ज्ञात्वा होमं समाचरेत् ॥ २२ ॥
अग्निप्रभां धूम्रवर्णध्वनिगन्धशिखाकृतीः ।
शुभ[10]चेष्टादिकं ज्ञात्वा कल्पयेत्तु शुभाशुभम् ॥ २३ ॥
मन्त्रतत्त्वा[11] नुसन्धानदेहावेशादिलक्षणम् ।
मन्त्रोच्चारणभेदञ्च ज्ञात्वा कर्माणि[12] साधयेत् ॥ २४ ॥
मण्डलं कलसद्रव्यशुद्धि[13] गन्धाष्टकादिकम् ।
दीक्षानाम[14]प्रदानादि ज्ञात्वा दीक्षां समाचरेत् ॥ २५ ॥
नित्यं नैमित्तिकं काम्यं नियमं नाम वासनाम् ।
पूजाधारणयन्त्रादि ज्ञात्वा कर्माणि साधयेत् ॥ २६ ॥
पूजागृहप्रवेशादिकुलपूजक[15]लक्षणम् ।
कुलद्रव्यादिशुद्धिञ्च[16] ज्ञात्वा पूजां समाचरेत्[17] ॥ २७ ॥

---

1. ङ, यामाद्यासाक्ष्यमालिका । 2. क, घ, ङ, शुद्ध्यादीन् ।
3. ख, मन्त्रादि । 4. क, घ, तत्त्वादिसङ्गतिम्; ख, तत्त्वानुसारतः ।
5. ख, देवताकालपुत्रादि ज्ञात्वा कर्म समारभेत्; ङ, देवताकालमुद्रादि ज्ञात्वा शृणु वरानने ।
6. ख, मन्त्रप्रमाणञ्च; ङ, तत्त्वप्रमाणञ्च ।
7. ख, मन्त्राणि । 8. ख, संस्तिर्नीं ।
9. ङ, कुण्डं तद्द्रव्यसंख्यादीन् । 10. ख, द्युत; ङ, व्रत ।
11. घ, तन्त्रा । 12. घ, मन्त्राणि ।
13. ख, कलसञ्चाथोदक; ङ, सकलं द्रव्यं शुद्धि ।
14. ङ, दीक्षाकाम । 15. ङ, पूजादि । 16. ङ, सिद्धिञ्च ।
17. क, घ, कर्माणि साधयेत् ।

अन्तर्यागं बहिर्यागं घटार्घ्यस्थापनादिकम्[1] ।
पञ्चपुष्पाञ्जलिं देवि ज्ञात्वा कर्माणि साधयेत्[2] ॥ २८ ॥
पात्राधारालिपिशितं कलामुद्राध्वमेलनम्[3] ।
वटुकादिबलिं देवि ज्ञात्वा कर्माणि साधयेत्[4] ॥ २९ ॥
कुलाकुलाख्यसहजशक्तिभेदञ्च[5] लक्षणम् ।
शुभ[6]लक्षणसंयुक्तं स्त्रीसंस्कारार्चनादिकम् ।
देवि सम्भोगकालञ्च ज्ञात्वा शक्तिं परिग्रहेत् ॥ ३० ॥
पानभेदं फलोल्लासप्रमाणं स्थिति[7]लक्षणम् ।
तत्त्वत्रयस्य स्वीकारं ज्ञात्वा कुलसुधां पिबेत् ॥ ३१ ॥
चक्रप्रवेशं प्रणतिं स्थितिं निर्गमनं प्रिये ।
योगिनीभोग[8]चेष्टादि ज्ञात्वा भवति कौलिकः ॥ ३२ ॥
रत्युल्लासनकालञ्च कुलदीपनिवेदनम्[9] ।
शान्तिस्तवादिपठनं ज्ञात्वा स्यात् कुलदेशिकः ॥ ३३ ॥
मिथुनानुग्रहाष्टाष्टपुष्पिणीकन्यकार्च्चनाम् ।
विशेषतिथिपूजाञ्च ज्ञात्वा कर्माणि साधयेत्[10] ॥ ३४ ॥
आम्नायभेदं सङ्केतं[11] पुष्पसङ्कोचमेव च ।
गुरुत्रयं[12] सम्प्रदायं ज्ञात्वा कर्माणि साधयेत् ॥ ३५ ॥
श्रौतविद्याकुलाचारं मनुभेदञ्च[13] पादुकाम् ।
चरणत्रितयं[14] देवि ज्ञात्वा कर्माणि साधयेत्[15] ॥ ३६ ॥

---

1. ख, मध्ययागञ्च केवलम्; ङ, अर्घ्यादिस्थापनादिकम् ।
2. ख, पूजां समाचरेत् ।
3. ख, कलामेलनतत्परम्; ङ, पात्राधारादिकशतं द्रव्यं कामकलात्मकम् ।
4. ख, पूजां समाचरेत् ।
5. क, कुलाकुलाख्यशक्तिञ्च मुद्राभेदञ्च; ङ, कुलाकुलाख्यगमनं शक्तिभेदञ्च ।
6. क, शुद्ध ।
7. ख, परोल्लासप्रमाणस्तिथि ।
8. ख, ङ, योग ।
9. ख, कुलदीपनसेवनम् ।
10. ख, स्यात् कुलदेशिकः ।
11. क, घ, ङ, सङ्कोचं ।
12. घ, ओघत्रयं; क, ख, ग, ओजस्त्रयं ।
13. क, मालिनीभेद ।
14. क, चरणद्वितयं ।
15. ख, स्यात् कुळदेशिकः ।

स्वाधिकस्य समन्यूनकौलिकाराधनक्रमम् ।
सिद्धमुद्रा[1]धरार्चादि ज्ञात्वा कर्माणि साधयेत् ॥ ३७ ॥
गुर्वग्नि[2]प्रेतसंस्कारमन्त्येष्टिं दिग्बलिक्रमम् ।
मोक्षदीपविधानादि ज्ञात्वा कर्माणि साधयेत्[3] ॥ ३८ ॥
इत्याद्याः कथिताः किञ्चिद्विशेषाः कुलनायिके ।
सर्वेषामेव मन्त्राणां विधिः साधारणक्रमः[4] ॥ ३९ ॥
मन्त्राः पुरुषदेवाः स्युर्विद्याः स्त्रीदेवताः प्रिये ।
मन्त्राः पुंसो हुंफडन्ताः प्राणे चरति दक्षिणे ।
प्रबुध्यन्तेऽग्निजायान्ता विद्याः स्त्रीदेवताः प्रिये ॥ ४० ॥
वामे प्राणे प्रबुध्यन्ते नमोऽन्ताः स्युर्नपुंसकाः ।
नाडीद्वयगते प्राणे सर्वे[5] बोधं प्रयान्ति च ॥ ४१ ॥
शान्तिके मनवः सौम्या भूयिष्ठेन्दुमृताक्षराः[6] ।
स्वाहान्ताः स्युर्वियत्प्रायाश्चाग्नेयाः क्रूरकर्मसु[7] ॥ ४२ ॥
फट् च पुष्टौ वषट् वश्ये[8] हुंफट् चैव तु मारणे ।
स्तम्भने च नमः प्रोक्तं[9] स्वाहा शान्तिकपौष्टिके ॥ ४३ ॥
होमतर्पणयोः स्वाहा न्यासपूजनयोर्नमः ।
मन्त्रान्ते योजयेन्मन्त्री जपकाले यथास्थितम्[10] ॥ ४४ ॥
शान्तिके राजतं ताम्रं भूर्जपत्रन्तु वश्यके ।
सर्वकार्येषु सौवर्णं क्रूरे स्यात् प्रेतकर्पटम् ॥ ४५ ॥
त्रिगन्धं शान्तिके प्रोक्तं पञ्चगन्धञ्च वश्यके ।
सर्वकार्य्येष्वष्टगन्धं क्रूरे चाष्टविषाणि च ॥ ४६ ॥

---

1. क, ङ, सिद्धिमुद्रा । 2. ख, कुलाग्नि ।
3. ख, जपहोमविधानादि ज्ञात्वा स्यात् कुलदेशिकः ।
4. क, वर्णानां विधिः साधारणक्रमः; ख, विधिं साधारणं क्रमात्; ङ, विधिः सावरणक्रमः । 5. ङ, सर्वे मन्त्राः ।
6. क, भ्रमिष्ठेन्दुमृताक्षराः; ख, भूमिच्चानमृताक्षराः ।
7. ख, विंपत्प्राया विज्ञेयाः क्रूरकर्मसु; ङ, वियच्छाया क्रूरकर्माणि साधयेत् । 8. ङ, सिद्धिपुष्टौ वशे दुःखं ।
9. ख, नमो भाग्ये । 10. ङ, यथास्थितिः ।

शान्तिके लेखनी दूर्वा वश्यादौ शिखिपुच्छिका ।
हेम्ना तु सर्वकार्याणि क्रूरे स्यात् काकपुच्छिका* ॥ ४७ ॥
स्वगृहे[1] शान्तिकर्म स्याद्वश्याद्यं चण्डिकालये ।
सर्वकार्यं देवगृहे श्मशाने क्रूरकर्म च ॥ ४८ ॥
लक्षणान्येवमादीनि[2] ज्ञात्वा गुरुमुखात् प्रिये ।
सर्वकर्माणि कुर्वीत मन्त्री तत्तत्फलाप्तये ॥ ४९ ॥
मूले प्रासादबीजञ्च तरुणादित्यसन्निभम् ।
उत्तमाङ्गे पराबीजं चन्द्रायुतसमप्रभम् ॥ ५० ॥
परस्परजनस्पर्शजनितानन्दनिर्भरः ।
मूलादिब्रह्मरन्ध्रान्तं अनवच्छिन्नरूपिभिः[3] ॥ ५१ ॥
परामृतरसासेकैः[4] सिक्तमापादमस्तकम् ।
आत्मानं भावयेन्नित्यं स भवेदजरामरः ॥ ५२ ॥
एवं ध्यात्वा कुलेशानि सर्वकर्माणि साधयेत् ।
सिध्यन्ति[5] तरसा देवि नात्र कार्या विचारणा ॥ ५३ ॥
ध्यानमेदं[6] प्रवक्ष्यामि सर्वसिद्धिकरं प्रिये ।
ईप्सितं लभते येन पूजाहोमादिकं विना[7] ॥ ५४ ॥
स्थाने मनोहरे देवि साधकः स्थिरमानसः ।
स्थितो मृद्वासने ध्यायेद् गुरुवन्दनपूर्वकम् ॥ ५५ ॥
मस्तकस्थितसम्पूर्णचन्द्रमण्डलमध्यगम्[8] ।
श्रीप्रासादपराबीजं षोडशस्वरसंयुतम् ॥ ५६ ॥
शुद्ध[9]स्फटिककर्पूरकुन्देन्दुधवलं प्रिये ।
सच्चन्द्रबिम्ब[10]सञ्जातसुधाप्लावितविग्रहम् ॥ ५७ ॥

---

* ङ पुस्तके श्लोकार्द्धमिदं नास्ति ।

1. ङ, गृहे च । 2. ख, इति तत्तसमादीनि ।
3. ख, दाप्तिभिः । 4. घ, ङ, परमामृतसंसिक्तैः ।
5. क, सिध्यति । 6. ङ, न्यासमेदं ।
7. ख, जपपूजादिकं विना ।
8. ख, मध्यगे ; ङ, मण्डलम् । 9. ख, मुक्ता ।
10. ख, बीज ।

आत्मानं भावयेन्नित्यं निश्चलेनान्तरात्मना ।
सर्वारिष्टं[1] विलीयेत शुभश्रीपुष्टिकारकम्[2]* ॥ ५८ ॥
श्रीप्रासादपरामन्त्रमष्टोत्तरसहस्रकम् ।
तरुणोल्लाससहितो मण्डलं पूजयेत् प्रिये ॥ ५९ ॥
अपमृत्युमहारोगजरामरणजं भयम् ।
ग्रहापस्मारवेतालभूतोन्मादादिजं भयम् ॥ ६० ॥
जित्वाधिव्याधिरहितः पुत्रपौत्रसमन्वितः ।
जीवेद्वर्षशतं सार्द्धं[3] पूजितः सर्वमानवैः ॥ ६१ ॥
अश्रुतं बुध्यते शास्त्रं कविता निर्मला[4]भवेत् ।
चिन्मयो जायते[5] साक्षान्नात्र कार्या विचारणा ॥ ६२ ॥
ज्वरोन्मादादिरोगेषु जपेच्छिरसि चिन्तयन् ।
शूलवातव्रणग्रन्थिमूत्रकृच्छ्रादिसम्भवे ।
तत्तत्स्थानेषु देवेशि[6] पूर्ववच्चिन्तयन् जपेत् ॥ ६३ ॥
महारोगेषु जातेषु सर्वाङ्गेषु विचिन्तयेत् ।
तत्क्षणाच्छान्तिमायान्ति रोगाः सर्वे न संशयः ॥ ६४ ॥
दशेन्द्रियेषु[7] यो ध्यायेल्लभेदिन्द्रियसौष्ठवम् ।
यत्र बीजं स्मरेत्तत्र तत्फलं भवति[8] ध्रुवम् ॥ ६५ ॥
सदा यश्चिन्तयेन्मूर्द्धिन स भवेदजरामरः ।
सर्वरोगप्रहरणं[9] विद्यारोग्यप्रदं प्रिये ॥ ६६ ॥
अस्मात् परतरध्यानं[10] नास्ति सत्यं न संशयः ।
सात्त्विकध्यानजं देवि फलमेतदुदीरितम् ॥ ६७ ॥

---

* ख पुस्तके श्लोकार्द्धमिदं नास्ति ।

1. ङ, सर्वाभीष्टं ।
2. क, शुभश्रीप्राप्तिकारकम्; ङ, श्रीभद्रप्राप्तिकारणम् ।
3. क, ख, साग्रं ।
4. क, मङ्गला ; ख, घ, नर्गला ।
5. ङ, चिन्मये रोचते ।
6. ङ, सम्पृष्टा ।
7. ङ, देहेन्द्रियेषु ।
8. क, ङ, लभते ।
9. क, ख, सर्वरोगग्रहहरं ।
10. ङ, कालं ।

शान्तिकर्माणि सर्वाणि विधिनानेन कारयेत् ।
विधिनानेन देवेशि सौभाग्यमतुलं भवेत् ॥ ६८ ॥
द्वादशाधारपद्मेषु द्वादशस्वरसंयुतम् ।
बीजं सञ्चिन्तयेद् यस्तु स भवेदजरामरः ॥ ६९ ॥
षडाधारेषु षड्[1]दीर्घयुक्तं बीजं विचिन्तयेत् ।
षडाधारस्थदेवीभिः पूज्यते कुलनायिके ॥ ७० ॥
हृत्पद्मकर्णिकामध्ये सूर्यमण्डलसंस्थितम् ।
पराप्रासादबीजन्तु तरुणारुणसन्निभम् ॥ ७१ ॥
जवाबन्धूकसिन्दूर[2]पद्मरागप्रभोज्ज्वलम् ।
पञ्चविंशतिभिः स्पर्शाक्षरैः संवीत[3]मम्बिके ॥ ७२ ॥
तत्प्रभापटलच्छायाव्यक्तीकृत[4]जगत्त्रयम् ।
आत्मानञ्च स्मरेद्देवि निश्चलेनान्तरात्मना ॥ ७३ ॥
पराप्रासादबीजन्तु तरुणोल्लास[5]संयुतः ।
अष्टोत्तरसहस्रन्तु मण्डलं प्रजपेत् सुधीः ॥ ७४ ॥
देवदानवगन्धर्वसिद्धकिन्नरगुह्यकान् ।
विद्याधरान्मुनीन् यक्षान् नागानप्सरसः स्त्रियः ॥ ७५ ॥
सिंहव्याघ्रोरगेन्द्रादीनन्यान्[6] दुष्टमृगानपि ।
वश्यान् करोत्यसन्देहं किं पुनर्मानवादिकान्[7] ॥ ७६ ॥
महदैश्वर्यमाप्नोति स्वर्गभोगादिकं प्रिये ।
यस्य मूर्द्ध्नि स्मरन् जप्यात् स वश्यो जायते हठात्[8] ॥ ७७ ॥
राजसध्यानजं देवि फलमेतदुदीरितम् ।
वश्यकर्माणि सर्वाणि विधिनानेन कारयेत्[9] ॥ ७८ ॥

---

1. ङ, वा । 2. ङ, सङ्काशं ।
3. क, ङ, वाचान्त; घ, वेष्टित ।
4. क, ख, रक्तीकृत । 5. ङ, यौवनोल्लास ।
6. ङ, न् न्यास 7. ङ, मानवादयः ।
8. ख, ऽचिरात् । 9. क, साधयेत् ।

सर्ववश्यकरं देवि सर्वैश्वर्यफलप्रदम् ।
अस्मात् परतरं ध्यानं नास्ति सत्यं न संशयः ॥ ७९ ॥
लिखेत्त्रिकोणं षट्कोणं अष्टारञ्च महीपुरम् ।
मूलमन्त्रं लिखेन्मध्ये साध्यनामसमन्वितम् ॥ ८० ॥
षट्कोणेषु षडङ्गानि विलिखेत् परमेश्वरि ।
केशरेषु स्वरानष्टौ वर्गान् पत्रेषु पार्वति ॥ ८१ ॥
भूगृहस्य चतुष्कोणे विलिखेन्मूलमम्बिके[1] ।
पञ्चवर्णरजोभिश्च शुभं दृष्टि[2]मनोहरम् ॥ ८२ ॥
एवं यन्त्रं समालिख्य विधिवन्मन्त्रवित्तमः[3] ।
एकत्रिषड्वसुचतुःकलसान् स्थापयेत् प्रिये[4] ॥ ८३ ॥
मध्यादिचतुरस्रान्तं द्वात्रिंशत् कलसान् प्रिये[5] ।
अथवाष्टादशेशानि सप्त वा दश वा प्रिये* ॥ ८४ ॥
चतुरो वाप्यथैकं वा कुर्यात् साधकसत्तमः[6] ।
अस्थिरक्तशिरातन्तुमृण्मांसं[7] रुधिरं जलम् ॥ ८५ ॥
चर्मवस्त्रशिलाकूर्मनारिकेलफलं शिरः[8] ।
मन्त्रप्राण[9]समायुक्तां यजेत् कलसदेवताम् ॥ ८६ ॥
सावित्रीनापराङ्गानि मातरो भैरवान्विताः[10] ।
विदिक्षु गुरुविघ्नेश[11]दुर्गाक्षेत्रपतीन् प्रिये ॥ ८७ ॥

---

* क, घ पुस्तकयोः पद्यार्द्धमिदं नास्ति ।

1. ख, भूगृहे तु चतुष्कोणेष्वालिखेन्मन्त्रमम्बिके ।

2. ख, ङ, दृष्ट । 3. ङ, मन्त्रमुत्तमम् ।

4. क, एकत्रिचतुर्षु चतुःकलसानवस्थापयेत्; ङ, एकद्वित्रिषट्सु चतुःकलान् स्थापयेत् प्रिये । 5. ख, द्वाविंशतिघटान् क्रमात् ।

6. क, साधकः शक्तितः । 7. ङ, संयुतं ।

8. ख, चर्मवस्त्रशिखाकुर्वं नारिकेलफलं शिवः ।

9. ङ, मन्त्रपान । 10. क, घ, सावित्रीमूर्मिरङ्गानि मातरो भैरवान्विताः; ख, सावित्रीमूर्त्तिवं शादि मातरो भैरवान्विताः ।

11. ङ, विदितागुरुविघ्नेन ।

कलसेषु समभ्यर्च्य विधिवन्मन्त्रवित्तमः[1] ।
अभिषिञ्चेत् प्रियं शिष्यं सर्वपापप्रशान्तये[2] ॥ ८८ ॥
आयुःश्रीकान्तिसौभाग्यविद्यारोग्यादिकं[3] भवेत् ।
राजाभिषिक्तो लभते चतुःसागरगां महीम् ॥ ८९ ॥
अकिञ्चनोऽभिषिक्तश्च महदैश्वर्यमाप्नुयात् ।
वन्ध्याभिषिक्ता लभते पुत्रं सर्वगुणान्वितम्* ॥ ९० ॥
भूतापमृत्युरोगाद्या विनश्यन्ति न संशयः ।
त्रिलौहे वापि भूर्जे वा लिखित्वा यन्त्रमुत्तमम् ॥ ९१ ॥
विधृतं बाहुना देवि सर्वरक्षाकरं भवेत् ।
आयुरारोग्यमैश्वर्यं विद्यालाभं यशो जयम् ॥ ९२ ॥
यद् यत् स्वमनसोऽभीष्टं तत्तदाप्नोत्यसंशयः ।
खड्गवश्यं वयःस्तम्भं यक्षिण्यञ्जनपादुकाम् ॥ ९३ ॥
अणिमाद्यष्टसिद्ध्यादि महारसरसायनम् ।
सञ्जीवयोगगुटिकाप्रमुखाखिलसिद्धयः ॥ ९४ ॥
पराप्रासादमन्त्रज्ञैर्दृश्यन्ते नात्र संशयः ।
षट् कर्माणि प्रयुञ्जीत नान्यथा भवति प्रिये ॥ ९५ ॥
पीतद्रव्यैर्हरिद्राद्यैः समित्पत्रफलादिभिः ।
जुहुयात् पूर्ववन्मन्त्री देवताध्यानतत्परः ॥ ९६ ॥
वाक्श्रोत्रगतिदृक्सेनानदीग्रहरिपून् प्रिये ।
नानादुष्टमृगान् देवि स्तम्भयेन्नात्र संशयः ॥ ९७ ॥
ग्रहवेगादिदुष्टानां विनाशनकरं प्रिये[4] ।
अस्मात् परतर ध्यानं नास्ति सत्यं न संशयः ॥ ९८ ॥

---

* ङ पुस्तके इत आरभ्य सौभाग्यमुत्तमं लभेदित्यन्तश्लोका न सन्ति ।

1. ङ, मन्त्रमुत्तमम् ।

2. ङ, शिष्टं सर्वपापप्रणाशनम् ।

3. ङ, धनं । 4. ख, घ, ग्रहरोगादि दुष्टादिविनाशनकरं परम् ।

तामसध्यानजं देवि फलमेतदुदीरितम् ।
दुष्टमारणकर्माणि विधिनानेन साधयेत् ॥ ९९ ॥
इत्यादि ध्यानभेदेन[1] ज्ञात्वा गुरुमुखात् प्रिये ।
षट् कर्माणि प्रयुञ्जीत नान्यथा वीरवन्दिते ॥ १०० ॥
खदिरश्वेतमन्दारसित[2]भानुसमिद्वरैः ।
पलाशोडुम्बराश्वत्थप्लक्षापामार्गसत्वचैः[3] ॥ १०१ ॥
नन्द्यावर्त्तसिताम्भोजहयारि[4]कुसुमादिभिः ।
सितैरन्यैः शुभैर्द्रव्यैः समित्पत्रफलान्तरैः[5] ॥ १०२ ॥
भक्ष्यैश्च पायसैर्दूर्वासहितैस्तिलतण्डुलैः[6] ।
मधुरत्रयसंयुक्तैर्मन्त्रवित् कुलनायिके ॥ १०३ ॥
एकेन वाथ सर्वैर्वा तत्कार्यगुरुलाघवम् ।
ज्ञात्वा देवि सहस्रन्तु जुहुयादथ पञ्च वा[7] ॥ १०४ ॥
अयुतं नियुतं वापि प्रयुतं वा कुलेश्वरि ।
[illegible]दिते कुण्डे संस्कृते हव्यवाहने ॥ १०५ ॥
आवाह्य दैवतामस्मिन् ध्यात्वा सावरणां प्रिये ।
विधिवज्जुहुयाद्देवि तद्गतेनान्तरात्मना ॥ १०६ ॥
सर्वरोगव्रणोन्मादापस्मारोत्पातयक्ष्मजम् ।
सर्वदुःखप्रशमनं तत्क्षणान्नात्र संशयः ॥ १०७ ॥
अनेन सर्वशान्तिञ्च ज्ञानं विद्यां लभेत् प्रिये ।
कदम्बाशोकवकुलपुन्नागाम्रमधूकजैः ॥ १०८ ॥

---

1. [illegible] । 2. [illegible] ।
3. [illegible] । 4. [illegible] ।
5. [illegible] रक्तैः [illegible] । 6. [illegible] घ, भक्षैश्च [illegible] ।
7. [illegible] (ततः [illegible]) ।

चम्पकद्रुमपालाशपाटलश्रीकपित्थकैः ।
मालतीमल्लिकाजातिबन्धूकारुणपङ्कजैः* ॥ १०९ ॥
कह्लारारुणमन्दारयूथि[1]कुन्दजवादिभिः ।
सनारिकेलकदलीद्राक्षेक्षुपृथुकैरपि ॥ ११० ॥
चन्दनागुरुकर्पूररोचनाकुङ्कुमादिभिः ।
रक्तैरन्यैः शुभद्रव्यैः समिद्धृतफलोद्भवैः[2] ॥ १११ ॥
पूर्ववज्जुहुयाद्देवि विधिवन्मन्त्रवित्तमः ।
महीपतींश्च[3] पुरुषान् कान्ता यौवनगर्विताः ॥ ११२ ॥
सिंहान् मत्तान् तथा व्याघ्रान् मृगान् दुष्टान् गजानपि[4] ।
सिद्धदेवाप्सरोयक्षगन्धर्ववनितास्तथा ।
देवानपि[5] कुलेशानि वशयेन्नात्र संशयः ॥ ११३ ॥
वाजीलवणहोमेन स्त्रियमाकर्षयेद् ध्रुवम् ।
विधिनानेन देवेशि सौभाग्यमुत्तमं लभेत् ॥ ११४ ॥
बहुनात्र किमुक्तेन त्रिषु लोकेषु मन्त्रिणाम् ।
अनेन मन्त्रराजेन नासाध्यं विद्यते क्वचित् ॥ ११५ ॥
ऊर्ध्वाम्नायैकनिष्णातः[6] पराप्रासादमन्त्रवित् ।
कुलार्णवार्थतत्त्वज्ञो जीवन्मुक्तः कुलेश्वरि ॥ ११६ ॥
सुतीर्थे वाप्यतीर्थे वा[7] जलमध्येऽपि वा वसन् ।
पराप्रासादमन्त्रज्ञो मुक्त एव न संशयः ॥ ११७ ॥
दिक्पीठक्षेत्रमुद्रादिवृक्षवल्लीमठादिकाः ।
पूरभैरव[8]देव्यश्च ऊर्ध्वाम्नायस्य पार्वति ॥ ११८ ॥

---

* ख पुस्तके श्लोकोऽयमधिको दृश्यते । 1. क, जाति ।
2. ख, समित्पत्रफलान्तिकैः ; घ, समित्पत्रफलोद्भवैः ।
3. ख, महीपत्यादि । 4. ख, मत्तगजव्याघ्रान् सर्पदुष्टमृगानपि ।
5. ख, सर्वानपि ।
6. ख, निष्ठश्च ; ङ, निष्ठातः । 7. ङ, स्वतीर्थेनान्यतीर्थे वा ।
8. ङ, पूर्वभैरव ।

निम्बकारस्करोन्मत्तकण्टकीविप्रदन्तिभिः[1] ।
अस्थिकण्टकवृक्षाद्यैर्द्रव्यैरशुभसाधनैः[2] ॥ ११९ ॥
वटुकैः कृष्णवर्णैश्च समित्पत्रफलान्तरैः[3] ।
गृहधूमचिताङ्गारत्रिकट्वम्ल[4]चिताञ्जनैः ॥ १२० ॥
उन्मत्तरससंसिक्तै पिष्ट्वा सम्यक् प्रसेचितैः[5] ।
साध्यपादरजोभिश्च चिताभस्मसमन्वितैः ॥ १२१ ॥
साध्यप्रतिकृतिं कुर्यादेकनक्षत्रवृक्षजाम् ।
सम्यक्प्रतिष्ठितप्राणां कुण्डस्योपरि लम्बयेत्[6] ॥ १२२ ॥
खनेत्तत्प्रतिमां मन्त्री कुण्डस्याधो यथाविधि ।
मलीमसेन मनसा चोग्रदृष्टिरमर्षणः ॥ १२३ ॥
चितानले विषतरु[7]सप्तकाष्ठसमेधिते ।
तद्द्रव्यैर्जुहुयाद्देवि विधिवन्मन्त्रवित्तमः ॥ १२४ ॥
कुर्याद्विद्वेषणोच्चाट[8]मारणानि न संशयः ।
शान्तिके सात्विकं देवि श्वेतवर्णं विचिन्तयेत् ॥ १२५ ॥
वश्ये तु राजसं देवि रक्तवर्णं विचिन्तयेत्* ।
तामसं क्रूरकार्येषु कृष्णवर्णं विचिन्तयेत् ॥ १२६ ॥
आत्मरक्षां पुरा कृत्वा पश्चात् कर्माणि साधयेत् ।
योऽन्यथा कुरुते मोहात् स भवेद्देवतापशुः ॥ १२७ ॥
तस्माद्देवि महाषोढान्यासं पूजां बलिं सुधीः[9] ।
कृत्वा कर्माणि कुर्वीत नान्यथा वीरवन्दिते ॥ १२८ ॥

---

* ङ पुस्तके इतः सार्द्धश्लोको नास्ति ।

1. ख, मर्कटीविषदण्डिभिः ; ङ, कण्टकीविप्रदण्डिभिः ।

2. ख, अग्निकुण्डर्क्षवृक्षाद्यैर्द्रव्यैः ; घ, अस्थिकण्टकविप्राद्यैर्होमैरशुभकारणम् । ङ, स्तदा न शुभकारणम् ।

3. ख, कुटजैः कृष्णवर्णैश्च समित्पत्रफलान्तकैः ; क, घं, वटकैः कृष्णवर्णैश्च समित्पत्रफलान्तरैः ; ङ, फलार्णवैः ।

4. ख, त्रिकट्वग्निविधाञ्जनम् ; घ, ङ, त्रिकट्वग्नि ।

5. ख, प्रसाधितैः । 6. ङ, चिन्तयेत् ।

7. क, विप्रतरु ; ङ, रिपुतरु । 8. ङ, कुर्याद्विशेषच्चमुचार्य ।

9. घ, पूजामहासुधीः ।

मूलाधारसरोजान्त[1]र्वह्निमध्यगतं[2] प्रिये ।
पराप्रासादबीजं तत् कल्पान्ता[3]ग्निसमप्रभम् ॥ १२९ ॥
प्रतिलोमसु[4] संवीतं दशभिर्व्यापिकाक्षरैः ।
स्वयं कालानलसमः[5] सर्वभूतभयङ्करः ॥ १३० ॥
दक्षिणाशामुखो भूत्वात्युग्रदृष्टिमलीमसः[6] ।
यौवनोल्लाससहितः पराप्रासादसंज्ञकम् ॥ १३१ ॥
मन्त्रं मण्डलकं[7] जप्यादष्टोत्तरसहस्रकम् ।
अनिष्टकारिणः सत्त्वान् कलहायास[8]कारिणः ॥ १३२ ॥
वृथा द्वेष[9]करान् क्रूरान् सपर्याविघ्नकारिणः ।
भूतोपग्रहवेतालान् पिशाचान् यक्षराक्षसान्[10] ॥ १३४ ॥
इत्यादिदुष्टजन्तूंश्च सदा क्लेशकरान् परान् ।
तद्वह्निमध्यपतितान्निर्दग्धांश्च विचिन्तयेत् ।
क्षणेन नाशमायान्ति शलभा इव पावके[11] ॥ १३५ ॥
यस्य मूर्द्ध्नि स्मरेद्बीजं स मृत्युमधिगच्छति ।
ध्यानेनानेन देवेशि कालादीनपि नाशयेत्[12] ॥ १३६ ॥
इति ते कथितः किञ्चित् काम्यकर्मविधिः[13] प्रिये ।
समासेन कुलेशानि किं भूयः श्रोतुमिच्छसि ॥ १३७ ॥

इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये
सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे
ऊर्द्ध्वाम्नायतन्त्रे काम्यकर्मविधानं नाम
षोडश उल्लासः ॥ १६ ॥

---

1. ङ, मूलाधारसरोजान्तं । 2. क, वह्निर्मध्यगतं ।
3. क, घ, कालान्ताग्नि । 4. ख, प्रतिलोमेषु ।
5. ख, कल्पानलप्रभः ।
6. ख, दक्षिणाशान्वितमुखश्चोग्रदृष्टिर्मलीमसः; घ, दृष्टिर्मलीमसः ।
7. ख, मन्त्रन्तु मण्डलं । 8. ङ, नियताशय । 9. ङ, क्लेश ।
10. ख, ब्रह्मराक्षसान् । 11. क, ख, घ, पार्वति ।
12. ख, कलादीनपि नाशयेत्; ङ, कौलादीन्नाशयेत् ।
13. ङ, कर्मविधि ।

# सप्तदश उल्लासः

श्रीदेव्युवाच ।

कुलेश श्रोतुमिच्छामि गुरुनामादिवासनाम्[1] ।
तत्त्वं कुलपदार्थानां वद मे परमेश्वर ॥ १ ॥

ईश्वर उवाच ।

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण कुलज्ञानं प्रकाशते ॥ २ ॥
नमस्ते नाथ भगवन् शिवाय गुरुरूपिणे ।
विद्यावतारसंसिद्ध्यै स्वीकृतानेकविग्रह* ॥ ३ ॥
नारायणस्वरूपाय परमात्मस्वरूपिणे ।
सर्वाज्ञानतमोभेदभानवे चिद्घनाय च ॥ ४ ॥
सर्वज्ञाय दयाक्लृप्तविग्रहाय शिवात्मने ।
परत्रेह च भक्तानां भव्यानां भावदायिने ॥ ५ ॥
पुरस्तात् पार्श्वयोः पृष्ठे नमः कुर्यामुपर्यधः ।
सदा सच्चित्तरूपेण विधेहि तव दासताम् ॥ ६ ॥
गुशब्दस्त्वन्धकारः स्यात् रुशब्दस्तन्निरोधकः ।
अन्धकारनिरोधत्वात्[2] गुरुरित्यभिधीयते ॥ ७ ॥
गकारः सिद्धिदः प्रोक्तो रेफः पापस्य दाहकः ।
उकारो विष्णुरित्युक्तस्त्रितयात्मा गुरुः परः † ॥ ८ ॥
गकारो ज्ञानसम्पत्ती रेफस्तत्र प्रकाशकः ।
उकारः शिवतादात्म्यं गुरुरित्यभिधीयते ॥ ९ ॥

---

* ३—६ श्लोकाः ख, ङ पुस्तकयोर्न सन्ति ।

† 8–9 श्लोकौ ग पुस्तके न स्तः ।

1. ग, वाचतां ; घ, नामानिरूपिणम् ।    2. घ, निरोधेन ।

गुह्यागमात्मतत्त्वान्धनद्धानां[1] बोधनादपि ।
रुद्रादिदेवरूपत्वाद्[2]गुरुरित्यभिधीयते ॥ १० ॥
स्वयमाचरते शिष्यानाचारे[3] स्थापयत्यपि ।
आचिनोतीह शास्त्रार्थानाचार्यस्तेन कथ्यते ॥ ११ ॥
चराचरसमासन्न[4]मध्यापयति यः स्वयम् ।
यमादियोगसिद्धत्वादाचार्य इति कथ्यते ॥ १२ ॥
आत्मभावप्रदानात्तु[5] रागद्वेषादिवर्ज्जनात् ।
ध्यानैकनिष्ठचित्तत्वादाराध्य इति कथ्यते ॥ १३ ॥
देवतारूपधारित्वाच्छिष्यानुग्रहकारणात् ।
करुणामयमूर्त्तित्वाद्देशिकः कथितः प्रिये ॥ १४ ॥
स्वान्तःशान्तिसमुन्मीलत्परतत्त्वार्थचिन्तनात्[6] ।
मिथ्याज्ञानविहीनत्वात् स्वामीति कथितः प्रिये ॥ १५ ॥
मनोदोषादिदूरत्वाद्धेतुवादादिवर्ज्जनात्[7] ।
श्वादिप्राणिषु सादृश्याद् रम्यत्वाच्च महेश्वरः[8] ॥ १६ ॥
श्रीमोक्षज्ञानदातृत्वान्नादब्रह्मात्मबोधनात्[9] ।
स्थगिताज्ञानचिह्नत्वात्[10] श्रीनाथः कथितः प्रिये ॥ १७ ॥
देशकालाविरोधेन[11] वर्त्तमानात् कुलागमे ।
वशीकृतजगज्जीवा[12]द्देव इत्यभिधीयते ॥ १८ ॥

---

1. क, घ, गुह्यागमार्थतत्त्वार्थसन्धानात्; ख, गुह्यागमार्थतन्मन्त्रसन्धानात् ।

2. ङ, देवतारूपात् । 3. क, ख, शिष्यानाचरेत्; ङ, शिष्यो नाचारे । 4. ङ, आचारवशमापन्न । 5. ख, प्रसक्ताच्च ।

6. ख, स्वतन्त्रान्तः समुन्मीलन् परतन्त्रार्थचितनात्; घ, ङ, स्वान्तशान्तसुसम्मील ।

7. ग, हेतुरागविवर्जनात् । 8. ङ, श्र्यादिप्रा`षु सदृशादृश्यत्वाच्च । महेश्वरि; क, दृश्यत्वाच्च । 9. ङ, दात्मब्रह्मनिरोधनात् ।

10. ग, स्थापित ज्ञानचित् हृत्वात्; ङ, स्थगिताज्ञानचित्तत्वात् ।

11. क, ख, ग, ड, कालविरोधेन ।

12. क, ख, ग, घ, जगज्ज्ञाना ।

भवपाशप्रशमनात् टङ्कारेन्दुकशेखरात्[1] ।
रक्षणात् कमनीयत्वात् भट्टारक इतीरितः ॥ १९ ॥
प्रगुप्ता[2]गमवेदान्तरहस्यार्थविभावनात्[3] ।
भुक्तिमुक्तिप्रदानाच्च प्रभुरित्यभिधीयते ॥ २० ॥
योनिमुद्रानुसन्धानात् प्रस्फुरन्मन्त्रवैभवात्[4] ।
गीर्वाणगणपूज्यत्वाद्योगीति कथितः प्रिये ॥ २१ ॥
सङ्ग[5]दुःखपरित्यागात् यत्र कुलाश्रमाश्रयात् ।
मिथ आत्मनिबन्धत्वात्[6] संयमीत्यभिधीयते ॥ २२ ॥
तत्त्वस्वरूपननात्[7] परिवादादिवर्जितात् ।
स्वीकारात् शुभकार्याणां तपस्वीत्यभिधीयते ॥ २३ ॥
अक्षरत्वाद्वरेण्यत्वाद्धूतसंसारबन्धनात्[8]
तत्त्वमस्यर्थसिद्धत्वात्[9] अवधूतोऽभिधीयते ॥ २४ ॥
वीतरागमदक्लेशकोपमात्सर्यमोहतः ।
रजस्तमोविदूरत्वाद्वीर इत्यभिधीयते ॥ २५ ॥
कुलं गोत्रं समाख्यातं तच्च शक्तिशिवोद्भवम् ।
येन मोक्ष इति[10] ज्ञानं कौलिकः सोऽभिधीयते ॥ २६ ॥
अकुलं शिव इत्युक्तं[11] कुलं शक्तिः प्रकीर्त्तिता ।
कुलाकुलानुसन्धानान्निपुणाः कौलिकाः प्रिये ॥ २७ ॥
सारसंग्रहणाच्चैव धर्ममार्ग[12]प्रवर्त्तनात् ।
करणग्रामनियमात् साधकः सोऽभिधीयते ॥ २८ ॥

---

1. ङ, टकारेणेन्दुशेखरात् ।
2. ख, घ, प्रागुक्ता ।
3. ङ, रहस्यात्मनिषेवनात् ।
4. क, ङ, भैरवात् ।
5. क, घ, शङ्का ।
6. ख, ङ, स्वात्मानुसन्धानात्; ग, स्वात्मात्मवन्धेन; घ, स्वात्मानुबन्धत्वात् ।
7. क, घ, तत्त्ववत् पश्यमानत्वात्; ङ, तत्त्वरूपस्य मननात् ।
8. ङ, धूतसंस्कारबन्धनात् ।
9. ङ, तत्र यस्यात्मबोधत्वात् ।
10. ख, विश्वमतिज्ञानं; ग, मोक्षमभि; घ, मोक्षमिति ।
11. ग, ङ, शिवतामुक्तं ।
12. ङ, कर्म ।

भजनात् परया भक्त्या मनोवाक्कायकर्मभिः[1]।
तरत्यखिलदुःखानि[2] तस्माद्भक्त इतीरितः ॥ २९ ॥
शरीरमर्थं प्राणांश्च सद्गुरुभ्यो निवेद्य यः।
गुरुभ्यः शिक्षते योगं[3] शिष्य इत्यभिधीयते ॥ ३० ॥
योनिमुद्रानुसन्धानात् गिरिजापादसेवनात्।
निर्लीनो[4]पाधिविभवाद् योगिनीत्यभिधीयते ॥ ३१ ॥
शतकोटिमहादिव्ययोगिनी[5]प्रीतिकारणात्।
तीव्रमुक्ति[6]प्रदानाच्च शक्तिरित्यभिधीयते ॥ ३२ ॥
पालनाद्दुरितच्छेदात् कामितार्थस्य वर्द्धनात्।
पादुकेति समाख्याता मम तत्त्वं तव प्रिये* ॥ ३३ ॥
जन्मान्तरसहस्रेषु कृतपापप्रणाशनात्।
परदेवप्रकाशाच्च जप इत्यभिधीयते* ॥ ३४ ॥
स्तोकस्तोकेन मनसः परमप्रीतिकारणात्।
स्तोतृसन्तारणाद्देवि स्तोत्रमित्यभिधीयते ॥ ३५ ॥
यावदिन्द्रियसन्तापं मनसा संनियम्य च।
स्वान्तेनाभीष्टदेवस्य[7] चिन्तनं ध्यानमुच्यते ॥ ३६ ॥
चरितार्थविकाशाच्च[8] रक्षणादपि पार्वति।
नरनारीस्वरूपाच्च चरणं कथितं प्रिये ॥ ३७ ॥
वेदिताऽखिलशास्त्रार्थसद्धर्मर्थि[9]निरूपणात्।
दर्शनानां प्रमाणत्वाद्वेद इत्यभिधीयते ॥ ३८ ॥

---

* ङ पुस्तके श्लोकद्वयमिदं नास्ति।

1. ख, भक्तितः। 2. ङ, दुर्गाणि।
3. क, गुरुभ्यः शिष्यतोयोगं; ख, गुरुभिः शासितुं योग्यः।
4. क, घ, ङ, विलीनो; ग, विहीनो। 5. ग, दिव्यायोगिन्याः।
6. ङ, स्फूर्त्ति। 7. क, आत्मान्तरमभीष्टस्य।
8. क, चरितात्मविकाशाच्च; ङ, चरितार्थविकाराच्च।
9. ङ, सर्वधर्म।

पुण्यपापादिकथनाद्राक्षसादिनिवारणात् ।
नवभक्त्यादिजननात्[1] पुराण इति कथ्यते ॥ ८ ॥
शासनादनिशं देवि वर्णाश्रमनिवासिनाम् ।
तारणात् सर्वपापेभ्यः शास्त्रमित्यभिधीयते ॥ ९ ॥
स्मरणोत्सुकनिष्ठानां[2] धर्माधर्मनिरूपणात् ।
तिमिरोत्पाटनाद्देवि स्मृतिरित्यभिधीयते ॥ १० ॥
इष्टधर्मादिकथनात्तिमिराज्ञानभञ्जनात्[3] ।
हरणात् सर्वदुःखानां इतिहास इति[4] स्मृतः ॥ ११ ॥
आचारकथनाद्दिव्यगतिप्राप्तिनिदानतः[5] ।
महात्म[6]तत्त्वकथनादागमः कथितः प्रिये ॥ १२ ॥
शाकिनीगणपूज्यत्वात्तारणाद्भववारिधेः ।
परादिशक्तिसान्निध्याच्छाक्त इत्यभिधीयते ॥ १३ ॥
कौमारादिनिरोधत्वात्[7]लयजन्मादिभञ्जनाद्[8]
अशेषकुलसम्बन्धात् कौल इत्यभिधीयते
पाश[9]च्छेदकराद्देवि रञ्जनात् परतेजसः ।
यतिभिश्चिन्त्यमानत्वात् पारम्पर्यमितीरितम्
संसारसारभूतत्वात्[10] प्रकाशानन्ददानतः ।
यशःसौभाग्यकरणात् सम्प्रदाय इतीरितः
आदित्वात् सर्वमार्गाणां मनोल्लासप्रवर्द्धनात्
यज्ञादिधर्महेतुत्वादाम्नाय इति कीर्त्तितः

---

1. ग, घ, नवभक्त्यादिभजनात्; ङ, नव[illegible]
2. घ, स्मरणाच्चैकचित्तानां; ङ, स्मरणा[illegible]
3. ङ, पापपुण्यादिकथनात्तिमिराञ्जनभञ्[illegible]
4. ङ, कृपानिधिरिति ।
5. ङ, विधानतः । 6. ख, घ, [illegible]
7. ख, कौमार्यादिनिषेधत्वात्; ग, कौल[illegible]
8. ग, भावनात्; ङ, भाजनात् । 9. [illegible]
10. ग, भूततत्त्वत्वात् । 11. ङ, प्र[illegible]

श्रुतानेकमहामन्त्रयन्त्रतन्त्रादिदैवतात्[1] ।
श्रुतौ यदनविच्छिन्नाच्छ्रौत इत्यभिधीयते[2] ॥ ४९ ॥
आम्नायतत्त्वरूपत्वाच्चातुर्यर्थि[3]निरूपणात् ।
रागद्वेषादिशमनादाचार[4] इति कीर्त्यते ॥ ५० ॥
दिव्यभावप्रदानाच्च क्षालनात् कल्मषस्य च ।
दीक्षेति कथिता सद्भिर्भवबन्धविमोचनात्[5] ॥ ५१ ॥
अहम्भावहराद्भीतिमथनात् सेचनादपि[6] ।
कम्पा[7]नन्दादिजननादभिषेक इति स्मृतः ॥ ५२ ॥
उल्वणत्वात् परत्वाच्च देवताप्रीतिदानतः ।
शक्तिपातनिमित्तादप्युपदेश इति स्मृतः* ॥ ५३ ॥
मननात्तत्त्वरूपस्य देवस्यामिततेजसः ।
त्रायते सर्वभयतस्तस्मान्मन्त्र इतीरितः ॥ ५४ ॥
देहमास्थाय भक्तानां वरदानाच्च पार्वति ।
तापत्रयादिशमनाद्देवता परिकीर्त्तिता ॥ ५५ ॥
न्यायोपार्जितवित्तानामङ्गेषु विनिवेशनात् ।
सर्वरक्षाकराद्देवि न्यास इत्यभिधीयते ॥ ५६ ॥
मुदं कुर्वन्ति देवानां मनांसि द्रावयन्ति[8] च ।
तस्मान्मुद्रा इति ख्याता दर्शितव्याः[9] कुलेश्वरि ॥ ५७ ॥
अनन्तफलदानाच्च क्षपिताशेषकल्मषात् ।
मातृकात्मतया लाभकरणादक्षसालिका ॥ ५८ ॥

---

* ख पुस्तके श्लोकोऽयमधिको दृश्यते ।

1. ग, घ, स्तुतानेकमहामन्त्रयन्त्रतन्त्रादिदैवतं ।

2. ख, श्रोतारोऽप्यनवच्छिन्नाः श्रौतमित्यभिधीयते; ङ, संस्तुतानेमाहेन्द्रयन्त्रतन्त्रादिदैवतात् । श्रौतरौप्यानवच्छिन्नात् श्रौत इत्यभिधीयते । 3. ग, चातुर्थादि; घ, तुर्यर्थस्य; ङ, चातुर्यात्म ।

4. घ, ङ, दाचार्य । 5. ख, विमोचनी ।

6. ग, घ, अहङ्कारहराभीतिकथनात् सेचनादपि; ङ, अलङ्कार इवाभाति कथनात् सेवनादपि । 7. ख, ग, कल्पा ।

8. ङ, तारयन्ति । 9. ङ, तस्मात्तन्त्र इति ख्यातो दर्शितव्यः ।

मङ्गलत्वाच्च डाकिन्या योगिनीगणसंश्रयात् ।
ललितत्वाच्च देवेशि मण्डलं परिकीर्त्तितम्* ॥ ५९ ॥
कमलासनरूपत्वाल्लघुतत्त्वादिनाशनात् ।
शमितापारपापाच्च कलशः परिकीर्त्तितः* ॥ ६० ॥
यमभूतादिसर्वेभ्यो भयेभ्योऽपि कुलेश्वरि ।
त्रायते सततञ्चैव तस्माद् यन्त्रमितीरितम् ॥ ६१ ॥
आत्मसिद्धिप्रदानाच्च सर्वरोगनिवारणात् ।
नवसिद्धिप्रदानाच्च आसनं कथितं प्रिये ॥ ६२ ॥
मायाजालादिशमनान्मोक्षमार्गनिरूपणात् ।
अष्टदुःखादिविरहान्मद्यमित्यभिधीयते ॥ ६३ ॥
महादानार्थरूपत्वाद् यागभूम्येककारणात् ।
मद्भावजननाद्देवि मद्यमित्यभिधीयते* ॥ ६४ ॥
सुमनसः सेवितत्वाद् राज्यदत्वात् सदा प्रिये ।
सुराकारप्रदानत्वात् सुरेति परिकीर्त्तिता* ॥ ६५ ॥
अमृतांशुस्वरूपत्वान्मृत्युभीतिनिवारणात् ।
तत्त्वप्रकाशहेतुत्वादमृतं कथितं प्रिये* ॥ ६६ ॥
पानाङ्गविश्वरूपत्वात्त्रिचतुष्ककलाश्रयात् ।
पतितत्राणनाद्देवि पात्रमित्यभिधीयते* ॥ ६७ ॥
आशुशुक्षणिरूपत्वाद्धातृदेवप्रियादपि ।
रक्षणादपि चाधेयस्याधारं तु विदुर्बुधाः* ॥ ६८ ॥
माङ्गल्यजननाद्देवि संविदानन्ददानतः ।
सर्वदेवप्रियत्वाच्च मांस इत्यभिधीयते ॥ ६९ ॥
पूर्वजन्मानुशमनाज्जन्म[1]मृत्युनिवारणात् ।
सम्पूर्णफलदानच्च पूजेति कथिता प्रिये ॥ ७० ॥

---

* चिह्नितश्लोकाः ख पुस्तके अतिरिक्ता दृश्यन्ते ।

1. ङ, दपमृत्यु ।

अभीष्टफलदानाच्च चतुर्वर्गफलाश्रयात् ।
नन्दनात्[1] सर्वदेवानामर्चनं समुदाहृतम् ॥ ७१ ॥
तत्त्वात्मकस्य देवस्य परिवारवृतस्य च ।
नवानन्दप्रजननात्तर्पणं[2] समुदाहृतम् ॥ ७२ ॥
गम्भीरापार[3]दौर्भाग्यक्लेशनाशनकारणात् ।
धर्मज्ञानप्रदानाच्च गन्ध इत्यभिधीयते ॥ ७३ ॥
आघ्राणनप्रजननान्मोक्षमार्गप्रदर्शनात् ।
दग्धदुःखादिदमनादामोद इति कथ्यते* ॥ ७४ ॥
अन्नदानात् कुलेशानि[4] क्षपिताशेषकल्मषात् ।
तादात्म्य[5]करणाद्देवि अक्षताः परिकीर्त्तिताः ॥ ७५ ॥
पुण्यसंवर्द्धनाच्चापि पापौघपरिहारतः ।
पुष्कलार्थप्रदानाच्च[6] पुष्पमित्यभिधीयते ॥ ७६ ॥
धूताशेषमहादोषपूतिगन्धप्रभावतः ।
परमानन्दजननाद्धूप इत्यभिधीयते ॥ ७७ ॥
दीर्घाज्ञानमहाध्वान्ताहङ्कारपरिवर्जनात् ।
परतत्त्वप्रकाशाच्च दीप इत्यभिधीयते ॥ ७८ ॥
मोहध्वान्तप्रशमनात् क्षयार्तिविनिवारणात्[7] ।
दिव्यरूपप्रदानाच्च परतत्त्वप्रकाशनात् ।
ख्यातो मोक्षो दीप इति मोक्षमार्गैकसाधनः ॥ ७९ ॥
चतुर्विधं कुलेशानि द्रव्यञ्च षड्रसान्वितम् ।
निवेदनाद्भवेत्तृप्तिर्नैवेद्यं समुदाहृतम् ॥ ८० ॥
बहुप्रकारविचरद्भूतौघप्रीतिकारणात्[8] ।
लिप्तपापप्रशमनाद्बलिरित्यभिधीयते ॥ ८१ ॥

---

* चिह्नितश्लोकाः ख, पुस्तके अतिरिक्ता दृश्यन्ते ।

1. ङ, वन्दनात् ।

2. ख, निरानन्दप्रजननात्तर्पणं ; ग, प्रदानाच्च तर्पणं ।

3. ङ, गभीरापाय ।

4. ख, अमलत्वात् कुलेशानि ; ङ, आत्मज्ञानप्रदानाच्च ।

5. ङ, तदात्म ।

6. ग, पुष्कलानन्ददानाच्च ; घ, पुष्कलान्नप्रदानाच्च ।

7. क, पापजन्मनिवारणात् ; ख, क्षयोत्पत्ति ; घ, क्षयजन्म ।

8. ङ, विनिवारणात् ।

तत्त्वत्रयविशुद्धिः स्यात्त्वत्सेवा[1]मालतः प्रिये ।
तत्त्वप्रकाशहेतुत्वात्तत्त्वत्रयमितीरितम् ॥ ८२ ॥
चतुर्वर्गफलावापात् लुण्ठिता[2]ज्ञानबन्धनात् ।
कल्याणधर्ममूलत्वाच्चलुकं[3] कथितं प्रिये ॥ ८३ ॥
प्रकाशानन्दजननात् सामरस्यप्रदानतः ।
दर्शनात् परतत्त्वस्य प्रसाद[4] इति कथ्यते ॥ ८४ ॥
पाशसंछेदनाद्देवि नरकस्य निवारणात्[5] ।
पावनात् परमेशानि पान[6]मित्यभिधीयते ॥ ८५ ॥
कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ।
समीपसेवा विधिवत्[7] उपास्तिरिति कथ्यते ॥ ८६ ॥
पञ्चाङ्गोपासनेनेष्टदेवता प्रीतिदानतः ।
पुरश्चरति भक्तस्य तत् पुरश्चरणं प्रिये ॥ ८७ ॥
आवाहनादिकर्माणि षोडश द्वादशावधि ।
विधिनाचरणं प्रोक्तं उपहारमिति स्मृतम् ॥ ८८ ॥
सम्पूज्य सावृतिं[8] देवं षोडशैरुपचारकैः ।
स्वस्थानप्रेषणं प्रोक्तं मुद्रासनमिति प्रिये ॥ ८९ ॥
देवं पूजार्थमाह्वानमावाहनमिति स्मृतम्* ।
आसने सन्निवेशः स्यात् स्थापनं कुलनायिके ॥ ९० ॥
अन्योन्यसम्मुखाकारः सन्निधापनमीरितम् ।
यत्र कुत्राप्यचलनं सन्निरोधनमीरितम्† ॥ ९१ ॥
देवताङ्गे षडङ्गानां न्यासः स्यात् सकलीकृतिः ।
आच्छादनं समुद्दिष्टमवगुण्ठनमीरितम् ॥ ९२ ॥

---

* ङ पुस्तके श्लोकार्द्धमिदं नास्ति ।

† इदमपि श्लोकार्द्धं ङ पुस्तके नास्ति ।

1. ङ, द्रुत्सरा । 2. ङ, पोन्मोचिता । 3. ङ, चरुकं ।
4. घ, ङ, आनन्द । 5. ङ, नवतत्त्वस्य धारणात् ।
6. ङ, स्नान । 7. घ, ङ, विधिना । 8. ङ, सावृतं ।

दर्शनं धेनुमुद्राया[1] अमृतीकरणं प्रिये ।
क्षमस्वेत्यञ्जलिर्देवि[2] परमीकरणं प्रिये ।
स्वागतं कुशलप्रश्नं निगदेद्देवताग्रतः ॥ ९३ ॥
पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरुच्यते ।
जातीलवङ्गकक्कोलैरुक्तमाचमनीयकम् ॥ ९४ ॥
अखिलाघप्रशमनाद्धनपुत्रविवर्द्धनात् ।
अनर्घफलदानाच्च अर्घ्यमित्यभिधीयते* ॥ ९५ ॥
सिद्धार्थमक्षतञ्चैव कुशाग्रं[3] तिलमेव च ।
यवं गन्धः फलं[4] पुष्पमष्टाङ्गार्घ्यं प्रकीर्त्तितम् ॥ ९६ ॥
मध्वाज्यदधिभिः प्रोक्तो मधुपर्कः कुलेश्वरि ।
देहप्रक्षालनं स्नानं सुगन्धिसलिलैः सह ॥ ९७ ॥
चन्द्र[5]चन्दनकस्तूरीकालागुरुभिरुच्यते ।
अष्टाङ्गप्रणिपातन्तु कथितं वन्दनं प्रिये ॥ ९८ ॥
एतच्चराचरं[6] सर्वं क्षेत्रमित्यभिधीयते ।
तत् क्षेत्रं पालित येन क्षेत्रपालः स उच्यते ॥ ९९ ॥
इति ते कथिता किञ्चत् गुरुनामादिवासना ।
समासेन महेशानि यो जानाति स पूजकः[7] ॥ १०० ॥
रहस्यातिरहस्यानां रहस्योऽयं महेश्वरि ।
ऊर्ध्वाम्नायः समाख्यातः समासेन न विस्तरात् ॥ १०१ ॥
कुलार्णवमिदं शास्त्रं योगिनीनां हृदि स्थितम्[8] ।
प्रकाशितं मया चाद्य गोपनीयं प्रयत्नतः† ॥ १०२ ॥

---

* ख पुस्तके श्लोकोऽयमधिको दृश्यते ।
† क, ग, घ पुस्तकेषु इत आरभ्य सप्त श्लोका न दृश्यन्ते ।
1. ङ, दर्शयेद्धेनुमुद्राञ्च । 2. ङ, क्षमस्वेत्यङ्गुलिर्देवि ।
3. क, कुलाग्रं । 4. क, घ, जवागन्धफलं ।
5. क, गन्ध । 6. क, घ, एतच्चावरणं ; ग, एतदुच्चारणं ।
7. ख, देशिकः ; ङ, कौलिकः ।
8. क, घ, योगिनामुपवर्णितम् ; ग, सर्वसारमिदं प्रिये ।

पुस्तकञ्च महेशानि पशुगेहे न निक्षिपेत् ।
न दद्यात् पशुहस्ते च न पठेत् पशुसन्निधौ ।
न पठेदासवोल्लासं ग्रन्थं भूमौ न निक्षिपेत् ॥ १०३ ॥
नित्यं सम्पूजयेद्भक्त्या जानीयाद् गुरुवक्त्रतः ।
नापुत्राय प्रवक्तव्यं नाशिष्याय कदाचन ॥ १०४ ॥
स्नेहाल्लोभाद्भयादुक्त्वा सोऽचिरान्नश्यति ध्रुवम्[1] ।
देवि यद्विद्यते प्राज्ञे[2] तत्तत् किञ्चिन्मयोदितम् ॥ १०५ ॥
साधकानां हितार्थाय भुक्तिमुक्तिफलैषिणाम् ।
यश्चोर्ध्वाम्नायमाहात्म्यं पठेत् श्रीचक्रसन्निधौ ॥ १०६ ॥
भक्त्या परमया देवि यः शृणोति स कौलिकः ।
व्रतं स्नानं तपस्तीर्थं यज्ञदेवार्चनादिषु ॥ १०७ ॥
तत् फलं कोटिगुणितं लभते नात्र संशयः ।
त्वत्सन्निधौ सन्निवसेन्नात्र कार्या विचारणा ॥ १०८ ॥

इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये
सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे
ऊर्ध्वाम्नायतन्त्रे सप्तदश उल्लासः ॥ १७ ॥
॥ समाप्तोऽयं ग्रन्थः ॥

---

1. ख, परेप्रेतो भविष्यति ।    2. ख, देवि माया यदप्राक्षत् ।